श्री

श्रीगणेशाय नमः

श्रीधरोवाच। भगवन् परमेशान भ
क्तिरव्यभिचारिणी॥ प्रारब्धं
भुज्यमानस्य कथं भवति हे प्रभो॥१॥

श्रीधरोवाच॥ भगवन् परमेशान
भक्तिरव्यभिचारिणी॥ प्रारब्धं भुज्य
मानस्य कथं भवति हे प्रभो॥१॥

श्रीविष्णुरुवाच। प्रारब्धं भुज्यमानो हि
गीताभ्यासरतः सदा॥ स मुक्तः स सुखी
लोके कर्मणा नोपलिप्यते॥२॥

# BENARES SANSKRIT SERIES;

A

## COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH, M. A., C. I. E.

AND

G. THIBAUT, PH. D.

*No. 91.*

# ब्रह्मसूत्रदीपिका

श्रीमच्छङ्करानन्दभगवद्भिरचिता ।

## BRAHMASUTRADIPIKA

BY

SRI SANKARÂNANDA

EDITED BY

Râma Sâstri Tailanga,

PROFESSOR, GOVT. SANSKRIT COLLEGE, BENARES.

*Fasciculus I.*



BENARES.

*Published by the Proprietors Messrs. Braj B. Das & Co.,*
AND SOLD BY H. D. GUPTA,
*Secretary, Chowkhamba Sanskrit Book Depot.*

Printed at the Vidyâ vilâs Press & Tara Printing Works,
BENARES.

1904.




# अथ ब्रह्मसूत्रदीपिका ।

ॐ नमः परमात्मने ।

नमस्तुभ्यं महामाये वरदे कामरूपिणि ! ।
विद्यारम्भं करिष्यामि सिद्धिर्भवतु मे सदा ॥ १ ॥
शङ्करस्य नमस्कारं कृत्वा शङ्करभाष्यगा ।
सूत्रव्याख्या हिरुक् श्रोतुः सुखार्थं क्रियते मया ॥ २ ॥

(समीप, अन्त,)

वेदान्तमीमांसा शास्त्रस्य व्याचिख्यासितस्येदमादिमं सूत्रम । अधीतस्वाध्यायेनाऽकर्तृत्वादिरूपस्यात्मनो ऽवधारणम, तदवधारणाच्चाऽविद्यानिवृत्तेर्मोक्षस्य सिद्धिरित्यात्मनो ब्रह्मणो विचारस्य कर्त्तव्यतामाह—

## अथातो ब्रह्मजिज्ञासा ॥ १ ॥

अथशब्दः साधनचतुष्टयसंपत्त्यानन्तर्य्यमाह । अतःशब्दो हेत्वर्थः । ज्ञातुमिच्छा जिज्ञासा । ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा । यस्मादग्निहोत्रादिकर्माऽनित्यफलं ब्रह्मज्ञानं चाऽनन्तफलं तस्माच्छमदमादिसाधनचतुष्टयसंपत्त्यनन्तरं ब्रह्मणो वक्ष्यमाणलक्षणस्य जिज्ञासा कर्त्तव्येति वाक्यशेषः ॥ १ ॥

पूर्वाऽधिकरणे ब्रह्म जिज्ञास्यमित्युक्तं, किंलक्षणं पुनस्तद् ब्रह्मेत्यत आह भगवान्सूत्रकारः—

## जन्माद्यस्य यतः ॥ २ ॥

जन्मोत्पत्तिरादिर्यस्य तदिदं जन्मस्थितिभङ्गं जन्मादि अस्य प्रत्यक्षाद्युपस्थापितस्य विचित्रस्य जगतो यतो जन्मादि यस्मात्सर्वज्ञात्सर्वशक्तेः कारणाद्भवति तद् ब्रह्मेति वाक्यशेषः ॥ २ ॥

पूर्वाधिकरणे सत्यज्ञानादिरूपस्य ब्रह्मणो विसदृशजगज्जन्मादि-

कारणत्वं तटस्थलक्षणमुक्तम्, अर्थात्सर्वज्ञता च, इदानीं वेदस्याऽजायमानत्वेन तामाक्षिप्य 'अस्य महत' इत्यादिवाक्याद्वेदजन्मनः प्रतीतेरुक्तां सर्वज्ञतां समाधत्ते—

शास्त्रयोनित्वात् ॥ ३ ॥

विचित्रस्य ऋग्वेदादेः शास्त्रस्य योनिः कारणं तस्य भावस्तत्त्वं तस्मात् ।

प्रवृत्तिश्च निवृत्तिश्च पुंसां येनोपदिश्यते ।
तद्धर्माश्चोपदिश्यन्ते शास्त्रं शास्त्रविदो विदुः ॥

अथ वा पूर्वाधिकरणे यतो वेत्यादिशास्त्रं न विचारितं किन्तु क्षित्यादिकं सकर्तृकमित्यनुमानमुक्तमिति शङ्कां निवर्त्तयितुमक्षाद्यगम्यत्वेन ब्रह्मणः शास्त्रैकप्रमाणतामाह—शास्त्रेति । यथोक्तमृग्वेदादि शास्त्रं योनिः कारणमिति प्रमाणगम्यत्वमुक्तं, साक्षादेव शास्त्रकर्त्तृत्वेन चाऽर्थात्सिद्धम् ॥ ३ ॥

तदिदानीं सिद्धार्थे शास्त्रस्य सङ्गतिग्रहणाद्यभावाद् जैमिनीयवचनविरोधाच्चाऽऽक्षिप्य समाधत्ते—

तत्तु समन्वयात् ॥ ४ ॥

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । त्वदुक्तं न । कुतः ? तद्यथोक्तं ब्रह्म वेदान्तशास्त्रादेवगम्यते । कथं ? समन्वयात् । सम्यगन्वयः समन्वयः षड्विधतात्पर्यलिङ्गं तस्मात् । पूर्वाधिकरणे पुत्रस्ते जात इत्यादौ सङ्गतिग्रहणस्य रज्जुरियं नायं सर्प इत्यादौ प्रयोजनस्य च दर्शनात् जैमिन्यादिवचनानां कर्माऽभिप्रायकत्वात् सर्वज्ञे सर्वशक्तौ ब्रह्मणि शास्त्रं प्रमाणमेव ॥ ४ ॥

समन्वयादित्युक्तं, न च ब्रह्मणः सर्वज्ञत्वं सर्वशक्तिमत्वञ्च, ज्ञानस्वभावादद्वितीयत्वाच्च । तस्मादुपचारात्प्रधानादिकमेव सर्वज्ञं सर्वशक्ति च, अतस्तत्रैव समन्वय इति प्राप्ते इदं सूत्रम्—

ईक्षतेर्नाशब्दम् ॥ ५ ॥

न सांख्यादिपरिकल्पितं प्रधानादि वेदान्तशास्त्रेषु प्रतिपाद्यते । कुतः ? अशब्दं हि तत् । कथम् ? ईक्षतेः चेतनत्वश्रवणात् इत्यर्थः ॥ ५ ॥

'तत्तेज ऐक्षत' 'ता आप ऐक्षन्ते'त्यादौ तेजआदिवत् उपचारादयमीक्षणशब्द इति प्राप्ते इदं सूत्रम्—

गौणश्चेन्नात्मशब्दात् ॥ ६ ॥

गुणयोगादुपचारात्प्रवृत्तो गौणश्चेद्यदि प्रधानादीनामिति ब्रूषे, तन्न । कुतः ? आत्मशब्दात् । आत्मेति शब्दस्तस्मात् । तथाहि-'अनेन जीवेनात्मने'ति देवतायामात्मशब्द इति ॥ ६ ॥

नन्वात्मशब्दो ममात्मा भद्रसेन इतिवद् भृत्यवाची भूतात्मेन्द्रियात्मेति चेतनाऽचेतनवाची वा ज्योतिःशब्दो यथा क्रतुज्वलनवाचीत्यत आह—

तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

नेत्यनुवर्त्तते । त्वदुक्तं न । कुतः? तस्मिन् प्रकृते सदणिमादिगुणे निष्ठा तादात्म्यबुद्धिर्यस्य सोयं तन्निष्ठस्तस्य श्वेतकेतो'स्तत्त्वमसी'-ति वाक्यात्सत्त्वशुद्धस्य चेतनस्य मोक्षो ऽविद्यातत्कार्यनाशः 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये ऽथ संपत्स्ये' इत्युपदेशः श्रुत्या कथनं तस्मात् ॥ ७ ॥

अरुन्धतीदर्शनन्यायेन तन्निष्ठतेत्यत आह—

हेयत्वावचनाच्च ॥ ८ ॥

यद्ययं हानयोग्यं हेयं तस्य भावो हेयत्वं, नायमात्मेति ब्रूयात् न च तस्य वचनमभिधानं, तस्मान्नाऽरुन्धतीनयः । चकारस्त्वन्यदोषार्थः ॥ ८ ॥

'संयोगा विप्रयोगान्ता' इति न्यायेनाऽवचनमित्यत आह—

स्वाप्ययात् ॥ ९ ॥

एतत्कारणं प्रकृत्य यत्रैतदित्युपक्रम्य स्वपितिनामनिर्वचनेन-'स्वं ह्यपीतो भवती'ति स्वस्मिन्नात्मनि चेतनस्याप्ययो लयः, तस्मात् ॥ ९ ॥

कस्मिंश्चित् कल्पे प्रधानादि जगत्कारणं स्यादित्यत आह—

गतिसामान्यात् ॥ १० ॥

स्यादेव यदि क्वचिद्वेदान्तेषु तदप्यवगम्येत, न त्ववगम्यते, सर्वेष्वपि वेदान्तेषु गतिरवगतिश्चेतनकारणत्वस्यैव सामान्यं समानस्य भावः सामान्यं तस्मात् न त्वयुक्तम् ॥ १० ॥

नन्वस्तु चेतनं कारणं, मा भूत् सर्वज्ञमित्यत आह—

श्रुतत्वाच्च ॥ ११ ॥

श्रुतस्य भावः श्रुतत्वं तस्मात्सर्वज्ञं कारणं साक्षाद्वेदेनोक्तत्वादित्यर्थः । चकारस्तु रचनाऽनुपपत्त्यादिकं समुच्चिनोति ॥ ११ ॥

पूर्वाधिकरणे ऽप्तेजसोर्गौणत्वे तत्प्रायपठितस्यापि ब्रह्मणो मुख्यमीक्षणमुक्तमात्मशब्दादिभ्यः, अत्र तु मयटो विकारे प्राचुर्ये च तुल्यत्वात् प्रायदृष्ट्या विकारार्थत्वैत्यानन्दमयो जीवः । प्रत्युदाहरणेनाक्षिप्य प्रथममेकदेशिनां मते समाधानं ब्रूमः—

आनन्दमयो ऽभ्यासात् ॥ १२ ॥

'अन्यो ऽन्तर आत्मा आनन्द मय' इत्यत्रानन्दमयः परमात्मा । कुतः? तं प्रकृत्य 'यद्येष आकाश आनन्दो न स्या'दित्यादिना बहुकृत्वो ऽभिधानमभ्यासस्तस्मात् ॥ १२ ॥

विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १३ ॥

विकारवाची मयट्शब्दो विकारशब्दः, तस्मान्नानन्दमयः परमात्मेति चेत्, एवं यदि तन्न । प्राचुर्यात्तत्प्रकृतवचने मयड् इति सूत्रात् प्राचुर्यार्थताप्यवगम्यते । ततश्चानन्दाविकारो नानन्दमयः सः किन्तु आनन्दप्रचुर इत्यर्थः ॥ १३ ॥

मयट उभयसाधारण्ये प्राचुर्ये एवायमित्यत्र को हेतुरित्यत आह—

तद्धेतुव्यपदेशाच्च ॥ १४ ॥

तस्य हेतुः कारणम् 'एष ह्येवानन्दयाती'ति श्रुत्या व्यपदेशो ऽभिधानं तस्मात् । चकार आनन्दमयस्य कारणश्रवणमाह ॥ १४ ॥

ननु जीवो वा प्रधानं वा आनन्दस्य कारणमस्त्वित्यत आह—

मान्त्रवर्णिकमेव च गीयते ॥ १५ ॥

मन्त्रवर्णे प्रतिपाद्यं मान्त्रवर्णिकं सत्यज्ञानादिरूपं गुहाप्रविष्टं यत्त-देवानन्दमयशब्देन गीयते । चकार उक्तदूषणान्तरसमुच्चयार्थः ॥१५॥

अस्तूपक्रमादिना जीव एवेत्यत आह—

## नेतरोऽनुपपत्तेः ॥ १६ ॥

इतरो जीव इह न ग्राह्यः,कुतः? 'इदं सर्वमसृजते'त्याद्यनुपपत्तेः । न उपपत्तिरनुपपत्तिः तस्याः ॥ १६ ॥

नन्वस्तु इदं संकुचितमित्यत आह—

## भेदव्यपदेशाच्च ॥ १७ ॥

भेदो लब्धव्यभावः । 'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवती'ति श्रुत्या तस्य व्यपदेशस्तस्मात् । चकारः संकोचानुपपत्त्यर्थः ॥१७॥

प्रकरणादिकमपि जीवस्य प्रधानस्य वाऽस्त्वित्यत आह—

## कामाच्च नाऽनुमानापेक्षा ॥ १८ ॥

'सोऽकामयते'ति श्रुत्या योभिहितः कामस्तस्माच्चेतन एवानु-मीयते इत्यनुमानं प्रधानं तस्याऽनपेक्षाप्रसङ्ग इति यावत् । चकारः पूर्ववत् ॥ १८ ॥

नन्वस्तूपचरित इत्यत आह—

## अस्मिन्नस्य च तद्योगं शास्ति ॥१९॥

अस्मिन् प्रकरणे अस्य चेतनस्य तेन योगस्तादात्म्यं शास्ति उ-पदिशति शास्त्रं 'यदा ह्येवैष 'इत्यादिना । चकारः परिहारसमुच्चये । अथवा पुच्छशब्दस्य लाङ्गूले रूढस्याऽवयवे आधारे च लाक्षणि-कत्वस्य तुल्यत्वे ऽवयवप्रायपाठात् 'ब्रह्मपुच्छ' मित्यत्रापि ब्रह्मानन्द-स्यावयव इति प्रत्युदाहरणेनाक्षिप्य समाधत्ते सिद्धान्तेन—

आनन्दमयोभ्यासात् ॥

'अन्योन्तर आत्मानन्दमय' इत्यत्र 'ब्रह्मपुच्छं प्रतिष्ठे'ति स्वप्रधान-मेव ब्रह्म । कुतः ? 'असन्नेवे'त्यादिना ब्रह्मणोऽभ्यासात् ॥

विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥

विकारो ऽवयवः पुच्छं तस्य शब्दः, तस्मान्न स्वप्रधानमिति चेत्, एवं यदि तन्न। प्राचुर्यात् विकारप्रायपाठात्। विकारशब्दो न ब्रह्मणः स्वप्राधान्यं निवर्तयतीत्यर्थः ॥

तद्धेतुव्यपदेशाच्च ॥

तस्यानन्दमयादेर्जगतो हेतुः कारणं, भावप्रधानो निर्देशः। तद्धेतुत्वव्यपदेशः श्रुत्याऽभिधानं तस्मात्। शेषेष्वानन्दपदस्थानेषु ब्रह्म स्वप्रधानमिति पठित्वा पूर्ववद्व्याख्यानम् ॥ १९ ॥

पूर्वाधिकरणे मयटो विकारे आनन्दस्यानन्दमात्रे प्रमुख्य-देशकालवस्त्वपरिच्छिन्नवस्तुनि मुख्यार्थत्वेन पुनः प्राचुर्यानन्दच तु-ऽवयवेषु अतः प्रायपाठो बाधितः। पुनरिहापि मर्यादाधारकरणे-श्रवणाज्जीव एव प्राप्तैश्वर्यविशेषः कश्चित्स्यादित्यत आह—

## अन्तस्तद्धर्मोपदेशात् ॥ २० ॥

अथ य एषोन्तरादित्ये स परमेश्वरः। कुतः? तद्धर्मोपदेशात्। तस्य धर्मास्तद्धर्मा अपहतपाप्मत्वादयस्तेषाम्। 'उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेदे'त्यादि श्रुत्युपदेशाभिधानं तस्मात् ॥ २० ॥

नन्वादित्यादिभ्यो नान्य ईश्वर इत्यत आह—

## भेदव्यपदेशाच्चाऽन्यः ॥ २१ ॥

अस्ति देवतादिभ्यो ऽन्य ईश्वरः। कुतः? 'यश्चादित्ये तिष्ठ'न्नित्यादिना आधाराधेयभेदस्य व्यपदेशात्। चकार उक्तव्यावृत्त्यर्थः ॥ २१ ॥

पूर्वाधिकारणे ऽनन्यथासिद्धलिङ्गवशादनन्यथासिद्धरूपवस्त्वादि नीतम्, अत्र त्वाकाशश्रुत्यारूढसर्वभूतोद्गमादेर्लिङ्गस्य सङ्कोच इति प्रत्युदाहरणेनाक्षिप्य समाधत्ते—

## आकाशस्तल्लिङ्गात् ॥ २२ ॥

'आकाश इति होवाचे'त्याकाशशब्दः परमात्मा। कुतः? तस्य परमात्मनो लिङ्गं सर्वभूतोत्पत्त्यादि तस्मात् ॥ २२ ॥

पूर्वाधिकारणे'ऽस्य लोकस्य का गति'रिति सर्वकारणस्य प्रदर्शनाद उत्तरेपि सर्वकारणमाकाशं श्रुत्या निरूप्य व्यवस्थापितम्, अत्र तु न

तादृक् किञ्चिदस्ति, प्रत्युत सुषुप्ताविन्द्रियाणां सर्वभूतसाराणां प्राणालयोत्पत्त्योः श्रवणात्प्रस्तावदेवता मुख्यप्राण इति प्रत्युदाहरणेनाक्षिप्याऽतिदेशेन समाधत्ते—

अत एव प्राणः ॥ २३ ॥

'प्राण इति होवाचे'त्यत्र प्राणशब्दः परमात्मा । कुतः ? अत एव सर्वभूतोद्गमादिलिङ्गादेव ॥ २३ ॥

पूर्वाधिकरणे तल्लिङ्गादाकाशप्राणश्रुत्योर्ब्रह्मपरत्वमुक्तं,नात्र ज्योतिर्वाक्ये तदस्तीति रूढमेव ज्योतिरिति प्रत्युदाहरणेन ज्योतिर्लिङ्गश्रवणादिति दृष्टान्तेनाक्षिप्य समाधत्ते—

ज्योतिश्चरणाभिधानात् ॥ २४ ॥

'अथ यदतः परो दिवो ज्योति'रिति ज्योतिःशब्दवाच्यं ब्रह्मैव । कुतः ? चरणाभिधानात्। पूर्वस्मिन् गायत्रीवाक्यपादोत्पत्त्यादिना चरणानां पादानामुक्तत्वात् ॥ २४ ॥

छन्दोऽभिधानान्नेति चेन्न तथा चेतोर्पण-निगदात्तथा हि दर्शनम् ॥२५॥

पूर्वस्मिन्वाक्ये 'गायत्री वा इदं सर्वमेवे'त्यादिना गायत्र्याख्यस्य छन्दसो ऽभिधानात् न ब्रह्मण इति चेत्,एवं यदि तन्न। तथा चेतोर्पणनिगदात् चेतसो मनसो गायत्र्याख्ये छन्दसि ब्रह्मदृष्ट्या समर्पणं निगद्यते कथ्यते ऽनेनेति निगदस्तस्मात्। तथा हि दर्शनं हि यस्मात् यथात्र चेतसोर्पणस्य दर्शनमवलोकनं तथा ऽन्यत्रापि दर्शनम् । एतमेव वह्वृचा महत्युक्थ्ये मीमांसन्ते एत्यादि । अथवा चेतसोपर्णनिगदादिति चेतसोर्पणं यथा हि गायत्रीशब्दाऽभिधेये ब्रह्मणि निगद्यते तथाहि दर्शनम् । अन्यत्रापि छन्दोभिधायिना शब्देन 'सैषा विराडन्नादी'ति ब्रह्माऽभिधानस्य ॥ २५ ॥

ब्रह्मण्येव गायत्रीदृष्टिः किं न स्या ? दित्यत आह—

भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥

भूतमिदं सर्वमादिशब्देन पृथ्वी शरीरं हृदयानि तान्येव पादा

विभागास्तेषां व्यपदेशः कथनं तस्योपपत्तिः सम्भवः तस्मात् । एवं गायत्र्यां ब्रह्मदृष्टिः गायत्रीशब्दाभिधेये ब्रह्मणि नाऽक्षरमात्रं गायत्री भूतादिपादवत् । चकारः पूर्वपक्षिणोऽपि पूर्ववाक्यब्रह्मण्यनुपपत्तिमाह ॥ २६ ॥

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २७ ॥

उपदिश्यते इति वाक्यं परोदिवः अमृतं द्वितीयं, पञ्चमीसप्तम्यन्तत्वेन एतस्य पूर्वस्य च भेदात् । एवं यदि तन्न । कुतः ? उभयस्मिन्नपि पक्षद्वयेऽपि प्रातिपदिकार्थस्यैकत्वात् ब्रह्मप्रत्यभिज्ञानान्न विरोधः । तस्मात् । अथवा पञ्चम्यन्तत्वेन सप्तम्यन्तत्वेन वा व्यपदेश उभयस्मिन्नपि वृक्षाग्रे श्येनः वृक्षाग्रात्परतः श्येन इति च प्रत्यभिज्ञानान्न विरोध इति ॥ २७ ॥

पूर्वाधिकरणे दिवि दिव इति च प्रकृत्यभेदमाश्रित्य प्रत्यभिज्ञानेन ब्रह्मप्रतीतौ यच्छ्रुतेः प्रसिद्धार्थप्राधान्यात् ब्रह्मैव युक्तम्, अत्रापि पदार्थस्य प्राणादेः प्रधानत्वात् उपक्रमोपसंहारादिवाक्यार्थस्तदनुसारेण नेय इति देवता जीवो वा मुख्यप्राणो वा एकं वा द्वयं वा त्रयं वा ब्रह्मापि वा न तु ब्रह्मैवेति दृष्टान्तेनाक्षिप्य समाधत्ते—

## प्राणस्तथाऽनुगमात् ॥ २८ ॥

'प्राणोऽस्मि प्रज्ञात्मे'ति प्राणशब्दः परमात्मा । कुत ?स्तथानुगमात् । तथाहीन्द्रप्रतर्दनाख्यायिकायां 'यं त्वं मनुष्याय हिततमं मन्यसे' इत्यादिलिङ्ग वाक्यपर्यालोचनया परमात्मनो ऽनुगम उपगमो यस्मात् ॥ २८ ॥

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ २९ ॥

नात्र परमात्मोपदेशः । कुतः ? वक्तुरिन्द्रस्यात्मन उपदेशः । कुतः? 'तं मामायुरमृतमुपास्वे'त्यादिना तस्मात् इति चेत्, एवं यदि नेति पूर्वस्मादनुवर्तते । त्वदुक्तं न । कुतः ? अध्यात्मसम्बन्धभूमा ह्यस्मिन्, हि यस्मात् अस्मिन् प्रकरणे आत्मानमधिकृत्य वर्ततइत्य-

ध्यात्मं तस्य सम्बन्धः। नन्वात्मप्रतिपादकानि 'यावदस्मिन् शरीरे प्राणो वसति तावदायुर्न वाचं विजिज्ञासीत वक्तारं विद्या'दित्युपक्रम्य तद्यथा 'रथस्यारेषु' इत्यादीनि तस्य भूमा बाहुल्यम् ॥ २९ ॥

कथं तर्हि 'मामायु'रित्यादिना वक्तुरिन्द्रस्यात्मोपदेशः ?—

## शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३० ॥

शास्त्रस्य 'तत्त्वमसी'त्यादेर्दृष्टिरर्थोऽवगतिः,तया उपदेशो ऽभिधानं वामदेववत्। यथा वामदेवो 'ऽहं मनुरभव'मित्याद्युक्तवानेवमिति॥३०॥

## जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३१ ॥

जीवश्च मुख्यप्राणश्च तयोर्लिङ्गं 'वक्तारं विद्या'दिति जीवस्य 'प्राण एव प्रज्ञात्मेदं शरीरं परि गृह्य'त्यादि प्राणस्य। तस्मान्न परमात्मन एव ग्रहणमिति चेदेवं यदि तन्न। उपासात्रैविध्यात् उपासनमुपासा तिस्रो विधाः यस्याः सा त्रिविधा। तस्या भावस्त्रैविध्यम् उपासायास्त्रैविध्यं तस्मात्। जीवमुख्यप्राणग्रहणे वाक्यभेदः स्यात्, न ब्रह्मग्रहणे इत्यर्थः। प्राणशब्दः कथं ब्रह्मणी?त्यतआह—आश्रितत्वात् अन्यत्रापि 'प्राण इति होवाचे'त्यादौ ब्रह्मणि च स्वीकारात्। तत्तल्लिङ्गादिति चेत्तत्राह—इह तद्योगात् इहास्मिन्नध्याये तेषां लिङ्गानां योगात् विद्यमानत्वात्। तत्र आचार्यैकदेशीयास्तु एवं व्याचक्षते—जीवमुख्यप्राणलिङ्गैश्च ब्रह्मण एव उपासायास्त्रैविध्यं विवक्षितमुक्तं तथापि जीवब्रह्मदेवतामुख्यप्राणानां लिङ्गसन्निपाते ब्रह्मलिङ्गं बलीय इति तन्नोक्तम् । यद्य'प्यन्तस्तद्धर्मोपदेशात्, इत्यत्रैतदप्युक्तं तथाप्यत्र च कार्यकारणधर्मयोः सन्निपाते कारणमेवाश्रयणीमिति विशेषः ॥ ३१ ॥

इति ब्रह्मसूत्रदीपिकायां प्रथमाध्यायस्य प्रथमः पादः ॥

———o-o-o———

पूर्वपादे स्पष्टब्रह्मलिङ्गानि वाक्यानि विचारितानि,
द्वितीयपादे ऽस्पष्टब्रह्मलिङ्गानि वाक्यान्युपासना-
प्रचुराणि रूढिविषयाणि विचार्यन्ते—

## सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

सर्वेष्वपि वेदान्तेषु यत्प्रसिद्धं ब्रह्म सिद्धेरालम्बनेन इह सर्वं खल्विदं ब्रह्मैवेत्युक्तमाह ॥ १ ॥

## विवक्षितगुणोपपत्तेश्च ॥ २ ॥

वक्तुमिष्टा विवक्षिता उपासनायाम् उपादेयत्वेनोपदिष्टाः सत्यसङ्कल्पप्रभृतयः, विवक्षिताश्च ते गुणाश्चेति तेषाम्। यस्मिन् ब्रह्मण्युपपत्तिः सम्भवः तस्याः। चकार उभयसाधारण्यनिवारणार्थः ॥ २ ॥

जीवेपि केषां चित्सद्दशत्वाज्जीव एवेह स्या दित्यत आह—

## अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

शारीरो जीव इह न ग्राह्यः। कुतः? सत्यसङ्कल्पादीनां तस्मिन्ननुपपत्तेरसत्त्वादेव ॥ ३ ॥

ननु अणुत्वादीनां जीवधर्माणां ब्रह्मण्यसम्भवः समः, अतो जीवो न स्या ? दित्यत आह—

## कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥

'एत'मिति ब्रह्मणः कर्मत्वस्य 'अभिसम्भावितास्मी'ति जीवस्य कर्तृत्वस्य व्यपदेशस्तस्मात्। चकारो ऽणुत्वादेर्ब्रह्मणि सद्भावसमुच्चयार्थः ॥ ४ ॥

ननु मामहं जानामीतिवदयं कर्मकर्तृव्यपदेशः स्यादित्यत आह—

## शब्दविशेषात् ॥ ५ ॥

शब्दाज्जीवस्याऽभिधायिनः शाखान्तरे ऽन्तरात्मेति सप्तमीतत्पुरुषे हिरण्मयत्वादिगुणाभिधायको विशेषो यस्तस्मात्। सति चान्यस्मिन्नेकस्मिन् कर्मकर्तृभाव इत्यभिप्रायः ॥ ५ ॥

शब्दोपि 'यजमानः प्रस्तर' इत्यादिवदप्रसिद्धार्थ इत्यत आह—

## स्मृतेश्च ॥ ६ ॥

स्मरणं स्मृतिः 'ईश्वरः सर्वभूताना' मित्यादिः। चकारः प्रसिद्ध्यन्तरसमुच्चयार्थः ॥ ६ ॥

## अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥

अर्भकमल्पमोको नीडं यस्याः सा ऽर्भकौकाः तस्या भावस्तत्त्वं तस्मात्। 'एष आत्मान्तर्हृदय'इति परिच्छिन्नायतनत्वात्। न केवलमेवं तस्य जीवस्य व्यपदेशो ऽभिधानम्। 'अणीयान् व्रीहेर्वा यवाद्वा' इत्यादि। तस्मात् चकार उक्तसमुच्चयार्थः । न ब्रह्मग्रहणं न्याय्यमिति चेदेवं यदि तन्न। कुतः ? निचाय्यत्वात्। एवमणीयस्त्वं गुण ईश्वरो निचाय्यो द्रष्टव्यः । तस्य भावस्तत्त्वं तस्माद्व्योमवच्च । यथा सर्वगतमपि व्योम सूचीपाशाद्यपेक्षया ऽर्भकौका अणीयश्च एवम्। चकारो ब्रह्मणः सर्वात्मत्वसमुच्चयार्थः ॥ ७ ॥

## संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

सम्यग्भोगः संभोगः सुखदुःखादिस्तस्य प्राप्तिः। सर्वात्मत्वे ईश्वरस्य भोक्तृत्वादिप्रसङ्ग इति चेत् एवं यदि तन्न। कुतः? वैशेष्यात्। 'अनश्नन्न्योभिचाकशीती'त्यादिना ऽवयतरूपस्य भोगाभावस्तस्मात् ॥८॥

पूर्वाधिकरणे 'सर्वं खल्विदं ब्रह्मे'त्यपरादपि वाक्यान्मनोमयवाक्ये ब्रह्म स्वीकृतं, तस्य च वैशेष्येण हेतुना भोक्तृत्वं समर्थितं, तस्मादेव जीवो भोक्ता अत्ता यस्येत्यस्मिन् वाक्ये ऽप्यसंहर्तृत्वं तथाप्यग्निरन्नाद इति श्रुतिलोकप्रसिद्धिभ्यामग्निरेवाऽत्ता तद्वत्समासप्रसिद्धिभ्यां मनोमयं ब्रह्मेति दृष्टान्तेनाक्षिप्य समाधत्ते—

## अत्ता चराऽचरग्रहणात् ॥ ९ ॥

अत्ता संहर्त्ता परमेश्वरः। कुतः ? चराऽचरग्रहणात् 'यस्य ब्रह्म च क्षत्रं चे'त्यादिना चराचरस्य जङ्गमस्थावरस्य ग्रहणं स्वीकरणं तस्मात् ॥ ९ ॥

नन्वग्निजीवयोरपि साधारण्ये कुतः परमात्मैवात्ते?त्यत आह—

## प्रकरणाच्च ॥ १० ॥

प्रकरणं महावाक्यं 'न जायते म्रियते' इत्यादि तस्मात्। चकारः 'क इत्था वेदे'त्यादि दुर्विज्ञानत्वादिसमुच्चयार्थः ॥ १० ॥

पूर्वाधिकरणे मृत्युसन्निपातात् ब्रह्मक्षत्रादिविश्वमित्याश्रित्येश्वरः संहर्त्तेत्युक्तम्, इहापि तच्छब्दस्य सन्निहितगुहाप्रविष्टादिशब्दानुसारेण बुद्धिजीवपरत्वदृष्टान्तेनाक्षिप्य समाधत्ते—

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥११॥

गुहा बुद्धिर्हृदयं वा तां प्रविष्टौ तस्या अन्तःस्थितौ जीवपरमात्मानौ, हि यस्मात्तस्य जीवस्य दर्शनं प्रत्यक्षेण तस्य परमात्मनश्च, दर्शनश्रुत्या 'गुहाहित'मित्यादिकया तस्मात् ॥ ११ ॥

ननु बुद्धेरप्यस्ति दर्शनमित्यत आह—

## विशेषणाच्च ॥ १२ ॥

'सोऽध्वनः पारमाप्नोति' इति गन्तृत्वेन जीवस्य 'तद्विष्णोः परमं पद'मिति गम्यत्वेन परमात्मनो विशेषणं तस्मात् । चकारो बुद्धेः प्रकृतिविशेषणाभावं समुच्चिनोति ॥ १२ ॥

पूर्वाधिकरणे प्रथमं पिबन्ताविति सदृशयोर्जीवपरमात्मनोर्ग्रहणानुसारेण गुहाप्रवेशादिं चरमं नीतं यथा तद्वदेव एव प्रथमं छायात्मनः प्रतीतिरमृतत्वदीनां नयनं तस्मिन् । अत्राप्यत्यन्ताऽरुचिः, स किं जीवो वा देवतात्मा वे?ति दृष्टन्तेनाक्षिप्य समाधत्ते—

## अन्तर उपपत्तेः ॥ १३ ॥

'य एषोऽक्षिणी'ति चक्षुषो ऽन्तरः पुरुषः स परमेश्वरः । कुतः? अमृतत्वाऽभयत्वादीनां तत्रोपपत्तेः सम्भवात् ॥ १३ ॥

कथं परमेश्वरः सर्वगतो ऽक्षिणी?त्यत आह—

## स्थानादिव्यपदेशाच्च ॥ १४ ॥

सर्वगतस्याप्युपासनार्थः स्थानस्य पृथिव्यादेः, आदिशब्देन रूपस्य हिरण्मयश्मश्र्वादेर्नाम उदितत्वादे'र्यः पृथिव्यां तिष्ठ'न्नित्यादिना व्यपदेशस्तस्मात् । चकारोऽन्यस्य स्थानाद्यभावसमुच्चयार्थः ॥ १४ ॥

मा भूदयमक्षिणि, सुखविशिष्टे ऽस्त्वित्यत आह—

## सुखविशिष्टाऽभिधानादेव च ॥ १५ ॥

वाक्योपक्रमे प्रकान्तस्य सुखविशिष्टस्य 'प्राणो ब्रह्म कं ब्रह्मे'त्या-

दिना ब्रह्मण एव न त्वन्यस्याऽभिधानं, तस्मादत्र ब्रह्मण एव ग्रहणम् । चकारोपदेशः सहसिद्धं चक्षुर्ज्ञानम् अस्ति च क चिज्जीवस्याऽनुपास्यस्याऽव्यापिनो ऽक्षिस्थानाऽसम्भवसमुच्चयार्थः ॥ १५ ॥

उपक्रमो ऽप्यन्यस्य किं न स्यादित्यत आह—

## श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥

श्रुता उपनिषद् येन श्रुतोपनिषत्कस्तस्य या गतिरीश्वरश्रुतिस्मृतिप्रसिद्धो देवयानाख्यो मार्गस्तस्य 'ये उश्चैर्वास्मिन् शरव्यं कुर्वन्ति' इत्यादिना ऽभिधानात् । चकारो ब्रह्मशब्दादन्यत्राऽनुपपत्तिसमुच्चयार्थः ॥ १६ ॥

छायात्मविज्ञानात्मदेवतात्मपरमात्मनां कथं चिदुपपत्तिसाम्ये कुतः परमात्मैव गृह्यते नेतर? इत्यत आह—

## अनवस्थितेरसंभवाच्च नेतरः ॥ १७ ॥

न अवस्थितिरनवस्थितिः सर्वदा अवर्तमानत्वं छायात्मनः पुरुषान्तरस्य समीपे ऽसत्यविद्यमानत्वं, विज्ञानात्मनो रसादिग्रहणे सुषुप्तिसमये वा ऽविद्यमानत्वं, देवतात्मनो नियामकाऽभावादविद्यमानत्वं, तस्याः । न केवल मेतदमृतत्वादीनां त्रयाणामप्यसंभवः समानः जन्मादिमत्त्वात् । तस्माच्चकार उक्ताऽनुक्तदूषणसमुच्चयार्थः ॥ १७ ॥

न ईश्वरादन्यश्छायात्मा विज्ञानात्मा देवतात्मेति च पूर्वाधिकरणे स्थानादिव्यपदेशादिना ऽन्तरक्षिणीश्वर इत्युक्तं, स्थानंजीवस्याप्यमृतत्वादिवत् प्रधानस्यापि स्यादित्याक्षिप्य समाधत्ते—

## अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥

'यः पृथिवीमन्तरो यमयती'त्यादावन्तर्यमयति नियमयतीत्यन्तर्यामी उद्दिष्टः स परमेश्वरो ऽधिदैवादिषु दैवमधिकृत्य वर्तत इत्याधिदैवम् । आदिशब्देनाऽध्यात्ममधिभूतमित्यादि तेष्वधिदैवादिषु । कुतः? तद्धर्मव्यपदेशात् तस्य परमेश्वरस्य धर्मास्तद्धर्माः 'यं पृथिवी न वेदे'त्यादिना दुर्विज्ञानत्वादयः तेषां व्यपदेशादभिधानात् ॥ १८ ॥

अदृष्टत्वादिगुणेभ्यः प्रधानं किं न स्यादित्यत आह—

न च स्मार्तमतद्धर्माऽभिलापात् ॥ १९ ॥

न च स्मृत्या प्रतिपाद्यं स्मार्तं प्रधानं, कुतः? अतद्धर्माऽभिलापात् । तस्य प्रधानस्य धर्मास्तद्धर्मा न तद्धर्मा अतद्धर्माः 'अदृष्टो द्रष्टे'त्यादिनोक्ता द्रष्टृत्वादयस्तेषामभिलापो ऽभिधानं तस्मात् ॥ १६ ॥

शारीरस्तर्हि स्यादित्यत आह—

शारीरश्चोभयेपि हि भेदेनैवमधीयते ॥२०॥

शरीरे भवः शारीरो जीवः । चकारो नकारानुवृत्त्यर्थः । शारीरो पि न । कुतः? हि यस्मात् उभयेपि काण्वा माध्यन्दिनाश्च परमात्मनो भेदेन 'यो विज्ञाने तिष्ठन्नात्मनि तिष्ठ'न्नित्येवं शारीरमधीयते पठन्ति ॥ २० ॥

पूर्वाधिकरणे द्रष्टृत्वादिश्रवणात् न प्रधानं य आत्मनि इति भेदश्रवणात्,न जीवोप्यन्तर्यामीत्युक्तं,तद्वदत्राभानादिति प्रत्युदाहरणेनाक्षिप्य समाधत्ते—

अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥

यत् दृश्यमित्यादिनोक्तः न दृश्यो ऽदृश्यः तस्य भावस्तत्त्वं तदादिर्येषामग्राह्यत्वादीनान्ते अदृश्यत्वादयः ते गुणा यस्य सोयमदृश्यत्वादिगुणको भूतयोनिः परमेश्वरः । कुतः?'धर्मोक्तेः । सर्वधर्मा सर्वज्ञ' इत्यादिनोक्ताः तेषामुक्तेरभिधानात् ॥ २१ ॥

जीवप्रधानपदार्थयोरपि केषांचिद्धर्माणां संभवात् कुतो न स्वीकार? इत्यत आह—

विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥२२॥

विशेषणं 'दिव्यो ह्यमूर्त्तः पुरुष' इति जीवाद्व्यतिरिक्तत्वेन भूतयोनेर्व्यपदेशः । अक्षरात्परतः परप्रधानाख्यपदार्थात्पञ्चमीनिर्दिष्टात्पर इति प्रथमान्तत्वेन भूतयोनेः परमेश्वरस्य भेदेन व्यपदेशः । विशेषणं च भेदव्यपदेशश्च विशेषणभेदव्यपदेशौ ताभ्यां नेतरौ जीवप्रधानाख्यपदार्थौ ॥ २२ ॥

परशब्देन भूतयोनेरेवाऽवगमः कुतः? इत्यत आह—

## रूपोपन्यासाच्च ॥ २३ ॥

रूपस्य भूतयोनेः स्वरूपस्याऽनन्तरमुपन्यासादभिधानात् 'पुरुष एवेदं विश्वकर्मे'त्यादिना । चकारोन्यस्य तदसंभवार्थः ॥ २३ ॥

पूर्वाधिकरणे सर्वज्ञत्वं न प्रधानस्य सार्वात्म्येन च पुरुषस्य न ग्रहणं किं त्वीश्वरस्यैवेत्युक्तं,तदिदं सार्वात्म्यं जाठरे वा सर्वात्मनि वा जीवेपि वा भूताग्नौ वा ऽनैकान्तिकमित्याक्षिप्य समाधत्ते—

## वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥

'आत्मानमेवेमं वैश्वानर'मित्यादिनोक्तो वैश्वानरः विश्वश्चासौ नरश्च विश्वानरः विश्वे वा नरा अस्येति वैश्वानरः परमेश्वरः। कुतः? साधारणशब्दविशेषात् । साधारणशब्दयोर्विशेषः साधारणशब्दविशेषः वैश्वानरशब्दो ऽग्न्यादित्यात्मनां साधारण आत्मनश्च जीवपरमात्मनोर्यद्यपि तथाप्यस्ति विशेषः 'तस्य ह वा एतस्ये'त्यादिनोक्तो द्युमूर्धत्वादिस्तस्मात् ॥ २४ ॥

द्युमूर्धत्वादिकमपि परमेश्वरस्यैव कुत? इत्यत आह—

## स्मर्यमाणमनुमानं स्यादिति ॥ २५ ॥

'यस्याग्निरास्य'मित्यदिना स्मर्यमाणं रूपमस्य परमेश्वरस्याऽनुमीयते ऽनेनेत्यनुमानं लिङ्गं स्यात् भवेत् इति यस्मात् तस्मात् वैश्वानरः परमात्मैवेत्यर्थः ॥ २५ ॥

## शब्दादिभ्योन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात् पुरुषविदमपि चैन मधीयतएके ॥ २६ ॥

शब्दादिभ्यः परेभ्यः परमेश्वराग्निशब्दौ आदिशब्दाद्धृदयं गार्हपत्याद्यग्नित्रेताकल्पनादिशब्दौ च तदादयश्च तेभ्यः । न केवलमेवमन्तः प्रतिष्ठानादपि 'पुरुषोन्तःप्रतिष्ठितं वेदे'त्यादिना पुरुषस्यान्तरवस्थानाच्च न परमेश्वरो वैश्वानर इति चेत् एवं यदि तन्न। कुतः?जाठरापरित्योगेन दृष्ट्युपदेशात्परमेश्वरो जाठरीकारणीय इति कथनात् । अथवा जाठरवैश्वानरोपाधेः परमेश्वरस्य द्रष्टव्यत्वोपदेशात् दृष्ट्यु-

पदेशः कुतः? इत्यत आह-अस्मिन् द्युमूर्धत्वादेरसंभवात् असत्त्वात् । न केवलमेतस्य पुरुषस्यापि अधीयते चैनमग्निं पुरुषं वाजसनेयिनः । अयमेवाऽपि चेत्यस्याऽभ्युच्चयस्यार्थः । तथा हि पठन्ति'य एषोऽग्नि-र्वैश्वानरो यत्पुरुषविदमपि चैनमधीयते । इति सूत्रविषयं पठन्ति, तेषामेषोऽर्थः केवलजाठरपरिग्रहे पुरुषे ऽन्तःप्रतिष्ठितत्वं केवले स्यात् न तु पुरुषविदमपि चैन मधीयते वाजसनेयिनः पुरुषविदं पुरुषो ऽन्तः-प्रतिष्ठितं वेदेति ॥ २६ ॥

मा भूज्जाठरः, अस्तु देवता भूतं चेत्यत आह—

## अत एव न देवता भूतं च ॥ २७ ॥

अत एव उक्तहेतुभ्यो द्युमूर्धत्वादिभ्यः न देवता आदित्यादिः न च भूतं भौमोऽग्निः ॥ २७ ॥

## साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥

उक्तेभ्यो जाठरप्रतीको जाठरोपाधिर्वा वैश्वानर उपास्य इत्यु-क्तं, जैमिनिस्त्वाचार्यः साक्षादपि प्रतीकोपाधिनापि वैश्वानरस्ये-श्वरस्योपासनमविरुद्धं मन्यते ॥ २८ ॥

अस्मिन् पक्षे कथं प्रादेशमात्रश्रुतिरित्यत आह—

## अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥

'यस्त्वेनमेवं प्रादेशमात्र'मिति श्रुतिरतिमात्रस्यापीश्वरस्याऽवि-रुद्धेत्याश्मरथ्य आचार्यो मन्यते। कुतः?अभिव्यक्तेः। अतिमात्रोपीश्वरो भक्तानां प्रादेशमात्र एवाऽभिव्यज्यते प्रकटीभवति,यतः प्रदेशेषु वा उपलब्धिस्थानेषु विशेषेणाऽभिव्यज्यते । इतिशब्दः प्रकारवचनः॥२९॥

## अनुस्मृतेर्बादरिः ॥ ३० ॥

बादरिराचार्यः प्रादेशमात्रे हृदये प्रतिष्ठिते वसति स सर्वत्र प्रति-विषयं प्रस्थन्यायेन प्रादेशमात्रश्रुतेरविरोधं मन्यते । प्रादेशमात्रत्वे चा-यमप्रादेशमात्रोप्यनुस्मरणीयः प्रादेशमात्रश्रुतेरर्थावबुद्धये ॥ ३० ॥

## संपत्तेरिति जैमिनिस्तथा हि दर्शयति ॥३१॥

सम्पत्तिनिमित्ता वा स्यात्प्रदेशमात्रश्रुतिरिति जैमिनिराचार्यो

मन्यते । कुतः ? तथा हि-समानप्रकरणे वाजसनेयिब्राह्मणे मूर्धादिष्वनुक्रान्तेषु जठरादीनवयवान् प्रादेशमात्रश्रुतिः परमेश्वरस्य दर्शयति 'प्रादेशमात्रमिह वै देवाः सुविदिता' इत्यादिना ॥३१॥

नन्वत्राऽविद्यमाने परमेश्वरे कथं सम्पत्तिरपी?त्यत आह—

## आमनन्ति चैनमस्मिन् ॥ ३२ ॥

आमनन्ति चैनं परमेश्वरमस्मिन् चिबुकान्तराले जाबाला 'य एषोऽनन्त'इत्युपक्रम्य'वरणायां नास्यां च मध्ये प्रतिष्ठित'इत्यादिना । चकारः सर्वगतस्याऽत्रात्यन्ताऽसत्त्वस्य शङ्काया अनुदयमाह ॥ ३२ ॥

## इति ब्रह्मसूत्रदीपिकायां प्रथमाध्यायस्य द्वितीयः पादः ।

——————:0:0:0:——————

तृतीये पादे स्पष्टब्रह्मलिङ्गानि वाक्यानि निर्विशेषप्रचुराणि विचार्यन्ते ।

## द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥

द्यौश्च भूश्च द्युभुवौ द्युभुवावादिर्यस्य तदिदं द्युभ्वादि जगत् तस्याऽऽयतनमाश्रयः 'यस्मिन्द्यौः पृथिवी चान्तरिक्ष'मित्यस्मिन् मन्त्रे प्रतिपाद्यं ब्रह्म । कुतः? स्वशब्दात् । स्वस्यात्मनो वाचकः शब्दः स्वशब्दः 'तमेवैकं जानथ आत्मान'मित्यत्रात्मशब्दः, तस्मात् ॥ १ ॥

ननु प्रधानमेव कुतो न स्या?दित्यत आह—

## मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥

मुक्ता अविद्यातत्कार्यशून्यास्तैरुपसृप्यं तद् ब्रह्म यतस्तस्य तथा हि 'तथा विद्वा'नित्यादिना ऽस्मिन् प्रकरणे व्यपदेशो विशेषेणाऽपदेशोऽभिधानं तस्मात् ॥ २ ॥

नन्वस्तु मुक्तोपसृप्यं ब्रह्म जगत्कारणं, प्रधानञ्च स्यादित्यत आह—

## नाऽनुमानमतच्छब्दात् ॥ ३ ॥

अनुमीयते इत्यनुमानं प्रधानं नात्र । कुतः ? अतच्छब्दात् । न तस्य शब्दः तस्मात्प्रधानप्रतिपादकशब्दांऽभावादित्यर्थः ॥ ३ ॥

अस्तु तर्हि चेतन इत्यत आह—

प्राणभृच्च ॥ ४ ॥

चकारो ऽनन्तरहेतोरनुकर्षणार्थः । प्राणान् बिभर्तीति प्राणभृ-जीवः सोपि न । कुतः ? 'यः सर्वज्ञ' इत्याद्यतच्छब्दात् ॥ ४ ॥

जीवब्रह्मणोरभेदात् जीवः स्यादित्यत आह—

भेदव्यपदेशात् ॥ ५ ॥

भेदस्य 'तमेवैकं जानथ आत्मान'मिति ज्ञेयज्ञातृभावेन व्यपदेशात् जीवब्रह्मणोर्व्यपदेशात् ॥ ५ ॥

कुतो ब्रह्मैवाऽस्याश्रय? इत्यत आह—

प्रकरणात् ॥ ६ ॥

ब्रह्मण इति वाक्यशेषः । 'कस्मिन्' इत्युपक्रम्यैकविज्ञानेन सर्व-विज्ञानादिकं श्रूयमाणं ब्रह्मण्येवोपपन्नमित्यर्थः ॥ ६ ॥

ननु प्रकरणादिना जगत्कारणमेव प्रतीयते नेश्वर इत्यत आह—

स्थित्यदनाभ्यां च ॥ ७ ॥

स्थितिरवस्थितिरनशनमिति यावत् । 'अनश्नन्नन्यो ऽभिचाक-शीती'ति श्रुतेः । अदनं भक्षणं 'पिप्पलं स्वाद्वत्ती'ति'श्रुतेः । स्थितिश्च अदनं च ताभ्यामीश्वरो जीवादन्यः सिद्धः । न चेश्वरादन्यत् जगत्का-रणमिति चकारार्थः । कलाचिन्तेयम् ॥ ७ ॥

पूर्वाधिकरणे आत्मशब्दात् द्युभ्वाद्यायतनं ब्रह्मेत्युक्तं, तत्रात्मशब्दः प्राणे ऽनेकान्त इत्याक्षिप्य समाधत्ते—

भूमा संप्रसादादध्युपदेशात् ॥ ८ ॥

बहोर्भावो भूमा 'भूमे'त्यादौ परमात्मैव स्वीकरणीयः । कुतः ? सम्प्रसादादध्युपदेशात् । सम्यक् प्रसीदत्यस्यामवस्थायामिति सुषु-प्तिः सम्प्रसादः तया तस्यामवस्थायामवस्थितः प्राणी लक्ष्यते । सम्प्र-सादात्प्राणात् अधि उपरि 'एष'त्वित्यादिना उपदेशादभिधानात् ॥ ८ ॥

ननु 'प्राणो ह पिते'त्यादिना प्राणोपि भूमा श्रुत इत्यत आह—

## धर्मोपपत्तेश्च ॥ ९ ॥

धर्माणां 'यत्र नाऽन्यत्पश्यति नाऽन्यत् शृणोती'त्यादीनां तस्मिन् परमात्मन्युपपत्तेः। चकारस्तेषां प्राणे ऽनुपपत्तिं चाह ॥ ९ ॥

पूर्वाधिकरणे प्राणसार्वात्म्यं गौणमित्युक्तं तन्न, अब्रह्मणोपि प्रणवस्य सार्वात्म्यदर्शनादित्याक्षिप्य समाधत्ते—

## अक्षरमम्बरान्तधृतेः ॥ १० ॥

अश्नुतइत्यक्षरं न क्षरतीति वा। 'एतद्वै तदक्षर'मित्याद्युक्तम् अक्षरं ब्रह्मैव। कुतः? अम्बरान्तधृतेः। अम्बरमाकाशमव्याकृतं तदन्ते यस्य तदिदमम्बरान्तं तस्य धृतिर्धारणं तस्याः ॥ १० ॥

धृतिरपि चेतनस्य न स्यादित्यत आह—

## सा च प्रशासनात् ॥ ११ ॥

सा धृतिः परमेश्वरस्यैव कर्म। कुतः? प्रशासनात्। प्रकर्षेण शासनम् 'एतस्याऽक्षरस्य प्रशासने'इत्यादिना श्रुतं तस्मात् ॥ ११ ॥

अस्तु प्रशासनमप्यौपचारिकमित्यत आह—

## अन्यभावव्यावृत्तेश्च ॥ १२ ॥

अन्यस्याऽचेतनस्य भावो ऽन्यभावः अचेतनत्वं, तस्माद्व्यावृत्तिः पृथक्करणम् 'अक्षरस्य प्रशासितुरिदं दृष्टम्' इत्यादिना। चकार उपचारनिवारणार्थः ॥ १२ ॥

पूर्वाधिकरणे ऽक्षरशब्दवाच्यं ब्रह्म प्रशासनादित्युक्तम्, इदानीं 'तदपरमेव ब्रह्म ध्यायीते'ति ब्रह्मलोकफलदर्शनादिति बुद्धिसन्निधानादाक्षिप्य समाधत्ते—

## ईक्षतिकर्मव्यपदेशात्सः ॥ १३ ॥

'परं पुरुषमभिध्यायीते'ति परः पुरुषः परमात्मा। कुतः? 'ईक्षतिमीक्षते'इत्यन्तेन ईक्षतिकर्मणो व्यपदेशः। तस्य कर्म तद्व्याप्यं तस्य व्यपदेशः तस्मात्। स एव चेह परपुरुषो ऽभिध्यातव्यः प्रत्यभिज्ञायते ॥ १३ ॥

पूर्वाधिकरणे ईक्षतिध्यायतिकर्मणोः पुरुषत्वेन प्रत्यभिज्ञानादिके सति ध्यायतिकर्म परं ब्रह्मेत्युक्तं, तदयुक्तं, दहरवाक्योपक्रमोक-

जीवस्य वाक्यशेषे 'स उत्तम' इत्युत्तमपुरुषशब्दाऽभिधानात् तद्वत्पुरुषशब्दस्यापि ब्रह्मविषयत्वाऽसम्भव इत्याक्षिप्य समाधत्ते—

## दहर उत्तरेभ्यः ॥ १४ ॥

'दहरो ऽस्मि'न्निति वाक्ये दहरः सूक्ष्मः परमात्मा । कुतः ? उत्तरेभ्यो हेतुभ्यो 'यावान् वा अयमाकाश' इत्यादिनोक्तेभ्यः ॥ १४ ॥

ननु ब्रह्मपुरशब्दश्रवणात् कुतो न जीव ? इत्यत आह—

## गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥१५॥

गतिर्गमनं, शब्दो ब्रह्मलोकशब्दः 'अहरहर्गच्छन्त्येतं ब्रह्मलोक'मिति श्रुतेः । गतिश्च शब्दश्च गतिशब्दौ ताभ्यां गतिशब्दाभ्यां दहरः सः । तथा हि दृष्टं हि यथा ऽत्र तथा श्रुत्यन्तरेपि 'सता सोम्ये'त्यादिके इत्यहरहर्ब्रह्मलोकगमनं दृष्टमवगतम् । न च ब्रह्मलोक इति वैयधिकरण्यम्, यत एतदेवाऽहरहर्गमनं लिङ्गं च । लिङ्गमपि सामानाधिकरण्ये ॥ १५ ॥

नन्वाकाशोपमया 'गगनं गगनाकार' मितिं न्यायेनाऽऽकाश एव जीवो वा कुतो न स्यात् ? इत्यत आह—

## धृतेश्च महिम्नो ऽस्यास्मिन्नुपलब्धेः ॥१६॥

धारणं धृतिः तस्याः । 'स सेतुर्विधृति' रिति श्रुतेः दहरः परमात्मैव अस्य धारणस्य महिम्नः प्रभावस्या 'ऽस्मिन् परमेश्वरे सूर्याचन्द्रमसौ विधृतौ तिष्ठत' इत्यादिनोपलब्धेश्च उपलम्भात् ॥ १६ ॥

ननु रूढ्या भूताकाश एव किं दहरो न स्या?दित्यत आह—

## प्रसिद्धेश्च ॥ १७ ॥

प्रसिद्धिर्वैदिकी 'आकाशो न नामे'त्यादिना तस्याः । चकारो ऽन्यस्याऽनुपपत्त्यर्थः ।

## इतरपरामर्शात् स इति चेन्नाऽसम्भवात् ॥१८॥

इतरस्य जीवस्य परामर्शो लिङ्गम् । 'अथ य एष सम्प्रसाद' इत्यादि । तस्मात्स जीवो दहर इति चेत् एवं यदि तन्न । कुतः ? असम्भवात् । 'यावत् यावान्वा ऽय माकाश' इत्यादेर्लिङ्गस्येति शेषः ॥ १८ ॥

पूर्वाधिकरणे ऽपहतपाप्मत्वादयो ब्रह्मधर्मा उक्ताः । ते जीवे ऽपि सम्भवेयुरित्याक्षिप्य समाधत्ते—

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥

उत्तरात् 'य एषोऽक्षिणि पुरुषो दृश्यते' इति प्राजापत्याद्वाक्याज्जीवो ऽत्र चेद्यदि तन्न । कुतः ? आविर्भूतस्वरूपो यतः आविर्भूतं स्वरूपमस्येत्याविर्भूतस्वरूपः अक्षिलक्षितो निरुपाधिकस्वरूपः । तुशब्दो नकारार्थः ॥ १९ ॥

'अथ य एष सम्प्रसाद' इत्यादिजीवपरामर्शो एवं सति व्यर्थः स्यादित्यत आह—

## अन्यार्थश्च परामर्शः ॥ २० ॥

परामर्शो हि जीवादन्यस्य परमात्मनो रूपस्य प्रदर्शनार्थः । 'एष आत्मा ऽपहतपाप्मे'त्यादिरूपाऽवगतिप्रयोजनः। अथ वा ऽन्योऽर्थो यस्य स तथा । चकारो जीवग्रहणे ऽपुरुषार्थमाह ॥ २० ॥

## अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥

अल्पाऽभिधायिनी श्रुतिरल्पश्रुतिर्दहर इति तस्मान्न परमात्मेति चेदेवं यदि तन्नेति सूत्रान्तरात्। कुतः?तदुक्तं तत्त्वदीयं चोद्यम् उक्तपरिहारं निचाय्यत्वादिना ॥ २१ ॥

पूर्वाधिकरणे 'एतं त्वेव' इत्येतच्छब्दस्य प्रकृतार्थत्वाद्दहरस्य जीवता निरस्ता, तदयुक्तं, तत्रेत्यादौ सर्वनाम्नः प्रकृतार्थत्वाऽनियमादित्याक्षिप्य समाधत्ते—

## अनुकृतेस्तस्य च ॥ २२ ॥

'तमेव भान्त'मित्युक्तः प्राज्ञ एव । कुतः ? अनुकृतेरनुकरणात् अनुकृतेरनुभातिश्रुतेः । तस्य च 'तस्य भासे'त्यादिवाक्यादपि ॥ २२ ॥

न चाऽप्रसिद्धमिदं रूपमित्याह—

## अपि च स्मर्यते ॥ २३ ॥

स्मर्यते गीतासु 'न तद्भासयते' इत्यादिना ॥ २३ ॥

पूर्वाधिकरणेन तत्रेति सति विषये च साधारणी सप्तमी 'न तद्भासयते' इति विषयत्वनिषेधकस्मृत्या विषयत्वं व्यवस्थितं तद्वत्

परिमाणमपि जवमैश्वरं वेति संशये 'ऽङ्गुष्ठमात्रं पुरुष'मिति निर्णीतार्थस्मृत्या जैवमेवेति प्रत्युदाहरणेनाक्षिप्य समाधत्ते—

## शब्दादेव प्रमितः ॥ २४ ॥

अङ्गुष्ठमात्रः परमात्मा प्रमितः कुतः ? शब्दादेव ईशानादिपदकदम्बादेव ॥ २४ ॥

कथं पुनः सर्वगतस्य परमात्मनः परिमाणोपदेश ? इत्यत्र ब्रूमः—

## हृद्यपेक्षया तु मनुष्याऽधिकारत्वात् ॥ २५ ॥

हृदि हृदये ऽवस्थानस्याऽपेक्षया तु एवमतिमात्रस्याप्यङ्गुष्ठमात्रश्रुतिः। हृदयस्याऽङ्गुष्ठमात्रत्वं कुत? इत्यत आह-मनुष्याधिकारत्वात्। शास्त्रस्येति शेषः। मनुष्याणामाधिकारो मनुष्याधिकारस्तस्य भावस्तत्त्वं, तस्मात्। मनुष्याणां च प्रायेण स्वाङ्गुष्ठपरिमितं हृदयं ततस्तदपेक्षया ऽङ्गुष्ठमात्रः परमेश्वर इति ॥ २५ ॥

पूर्वाधिकरणे ऽङ्गुष्ठमात्रश्रुतिर्मनुष्यहृदयाऽपेक्षया मनुष्याधिकारत्वाच्छास्त्रस्येति उक्तं, तर्हि वेदान्ता अपि मनुष्याऽधिकारादेवेति दृष्टान्तेनाक्षिप्य समाधत्ते—

## तदुपर्यपि बादरायणः संभवात् ॥ २६ ॥

तेषां मनुष्याणामुपरि ये देवादयस्तेषामपि ब्रह्मविद्यायामधिकारं बादरायण आचार्यो मन्यते। कुतः ? संभवात्। सम्भाव्यते हि तेषामप्यर्थित्वादिकं विग्रहादिमत्त्वादित्यर्थः ॥ २६ ॥

## विरोधः कर्मणीति चेन्नाऽनेकरूपप्रतिपत्तेर्दर्शनात् ॥ २७ ॥

यदि विग्रहवती देवता कस्य यजमानस्य यागे देवताया विग्रहादिमत्त्वम्? इति चेदेवं यदि तन्न। कुतः ? अनेकरूपप्रतिपत्तेः। नैकरूपप्रतिपत्तिरनेकरूपप्रतिपत्तिः तस्याः। युगपदेको ऽनेकभोजने शक्तः एको ऽप्यनेकेषां नमस्कारक्रियायां शक्त इति नानाविधाया व्यवस्थायाः संभवात्। कुत एवं ? लोके दर्शनात्। अनेकेषां रूपप्रतिपत्तेर्वा तस्या ऐश्वर्यविशेषाद्देवतानां युगपदनेकशरीरस्वीकारात्। तदेव कथ? मित्यत आह-दर्शनात्। तथा हि-'कति देवा' ? इत्युपक्र-

स्य 'प्राण' इत्यन्तेन श्रौतेना'ऽऽत्मनश्च सहस्राणी' त्यादिना स्मार्तेन च वाक्येन देवादीनामनेकशरीरप्रतिपत्तिर्दृष्टा ॥ २७ ॥

## शब्द इति चेन्नाऽतः प्रभवात्प्रत्यक्षाऽनुमानाभ्याम् ॥ २८ ॥

मा भूत् कर्मणि विरोधः विग्रहादिमत्त्वेन देवादीनां शब्दार्थानामनित्यत्वाच्छब्दार्थयोर्नित्यसम्बन्धाऽभावात् शब्दे वेदे ऽर्थवियोगात् प्रमाणं न स्यात् चेदेवं यदि तन्न । कुतः ? अतः प्रभवात् अतो वैदिकाच्छब्दाद्देवादिकस्य जगतः प्रभव उत्पत्तिस्तस्मात् । स एव कथ ? मित्यत आह-प्रत्यक्षानुमानाभ्याम् प्रत्यक्षं श्रुतिप्रामाण्यं प्रत्यक्षाऽपेक्षत्वात् अनुमानं, स्मृतिः तद्विपर्यासात् । 'एतइति वै प्रजापति'रित्यादिका श्रुतिः । 'अनादिनिधने'त्यादिका स्मृतिः । अथ न पुनः करोतीत्यस्मदादीनां प्रथमतः शब्दः प्रतीयते पश्चात्क्रियते तदिदं प्रत्यक्षं प्रजापतेरपि पूर्वं देवादिवाचकाः शब्दा मनसि प्रादुर्भूताः पश्चात्तान् ससर्जेत्यनुमीयते इत्यनुमानं प्रत्यक्षं चाऽनुमानं च प्रत्यक्षानुमाने, ताभ्यामेव स विरोधः ॥ २८ ॥

तथा वेदस्य जनिमत्त्वेनाऽनित्यत्वमतः स स्यादित्यत आह—

## अत एव च नित्यत्वम् ॥ २९ ॥

अत एव नियताकृतेर्देवादेर्जगतो वेदशब्दप्रभवत्वान्नित्यत्वमपि प्रत्येतव्यम् ॥ २३ ॥

मा भूदेवं शब्दविरोधः, तथापि यदा पुनर्जगत्पूर्वं कृत्स्नं लीनं पुनरन्यज् जायते तदा स्यादेव विरोध इत्यत आह—

## समाननामरूपत्वाच्च वृत्तावप्यविरोधो दर्शनात् ॥ ३० ॥

अन्यत्वे ऽपि जायमानानां पूर्वेभ्यः पूर्वेषां चाऽऽवृत्तावपि प्रलये ऽप्यविरोधः । कुतः ? समाननामरूपत्वात्पूर्वेषां, नोत्तरेषामिति शेषः । सदृशं गौतमादिनाम, रूपं च सहस्राक्षत्वादि येषां ते समाननामरूपास्तेषां भावस्तत्त्वं तस्मात् । चकारात्कार्यस्य सत्त्वादपि॥३०॥

समाननामरूपत्वमेव कुत ? इत्यत आह—

दर्शनात्स्मृतेश्च ॥ ३१ ॥

'सूर्याचन्द्रमसा'वित्यादि, स्मृतिरपि 'ऋषीणां नामधेयानी'त्येवमादिका ॥ ३१ ॥

मध्वादिष्वसम्भवादनधिकारं जैमिनिः॥३२॥

'असौ वा आदित्यो देवमधु' आदिशब्देनाऽयमेव गौतमो ऽयं भारद्वाज इत्याद्याः । तासु मध्वादिषु विद्यास्वादित्यादीनामादित्यादिरूपस्य पूर्वमेव सिद्धत्वात् फलाऽभावादसम्भवः । तस्मात्कारणाद् ब्रह्मविद्यायामप्यनधिकारं जैमिनिराचार्यो मन्यते ॥ ३३ ॥

ज्योतिषि भावाच्च ॥ ३३ ॥

न केवलं फलाँऽभावादनधिकारः, ज्योतिष्यादित्यमण्डलादौ आदित्यादिशब्दानां भावात्सत्त्वादप्यचेतनत्वादित्यर्थः ॥ ३३ ॥

भावं तु बादरायणोऽस्ति हि ॥ ३४ ॥

तुशब्दो जैमिनिपक्षव्यावृत्त्यर्थः । बादरायण अचार्यो देवतादीनामधिकारसद्भावमाह । हि यस्मादस्ति देवताऽधिकारस्य सूचकं वाक्यजातं तथा विग्रहादिमत्त्वे ऽर्थित्वादौ च ब्रह्मविद्यायाः साकल्येपि 'हन्त तमात्मान'मित्युपक्रम्य 'इन्द्रो ह वै देवताना'मित्यादि । 'तद्यां यां देवता'मित्यादि च ॥ ३४ ॥

पूर्वाधिकरणे त्रैवर्णिकदेवानां 'तद्यो य' इति लिङ्गादधिकार उक्तः, शूद्रशब्दे च परामर्शात् लिङ्गादर्थित्वात् शूद्रस्याऽप्यधिकार इति दृष्टान्तेनाक्षिप्य समाधत्ते—

शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि ॥ ३५ ॥

शुक् शोकः अस्य जानश्रुतेः पौत्रायणस्य तत्तेषां हंसानामात्मन्यनादरो ऽवज्ञानम् । आदरो बहुमानो नाऽऽदरस्तस्य । 'क म्वरमेतत्सन्त'मित्यादिश्रवणात् श्रुतत्वात् तदा रैकप्रत्याद्रवणात् आगम-

नात् हि यस्मात् रैक्वेण 'हहारे त्वे'ति शूद्रशब्देनात्मनः परोक्षविषयज्ञानमस्तीति सूच्यते। अतो न जातिशूद्रो जानश्रुतिः ॥ ३५ ॥

रूढिरेव कुतो न स्वीक्रियते ? इत्यत आह—

## क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥३६॥

क्षत्रियस्यापि गतेरवगतेरुत्तरत्र संवर्गविद्यावाक्यशेषे 'अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिम्' इत्यादिप्रतारिणश्चैत्ररथस्य श्रवणात्। तेन ॥३६॥

तेन समानायां संवर्गविद्यायामधिकाराऽतिरेकेणाऽशूद्रस्याऽधिकार इत्यत आह—

## संस्कारपरामर्शात्तदभावाऽभिलापाच्च ॥३७॥

संस्कारा उपनयनादयः तेषां संस्काराणामभावस्तेषां 'तं होपनीये'त्यादिना ब्रह्मविद्याऽधिकारे परामर्शो ऽवगमः, तस्मान्न शूद्रोऽधिकारी। न च ते ऽपि तस्य सन्त्विति मन्तव्यमित्याह-तदभावाऽभिलापाच्च। 'तस्य शूद्रश्चतुर्थो वर्ण एकजाति'रित्यादिस्मरणेनाऽभिलपनमभिलापः तस्मात्। चकारोऽनधिकारार्थः ॥ ३७ ॥

नन्वसंस्कृतविषयः शूद्रशब्दो न जातिविषय इत्यत आह—

## तदभावनिर्धारणे च प्रवृत्तेः ॥३८॥

तस्य जातिशूद्रत्वस्याऽभावस्तदभावस्तस्य निर्धारणं 'नैतदब्राह्मणो वक्तुमर्हती'त्यनेन निश्चयः सत्यवचनेन तस्मिन् ज्ञाते जाबालिं गौतममुपनेतुमनुशासितुश्च 'समिधं सौम्ये'त्यादिना प्रवर्त्तनं प्रवृत्तिः, तस्याः। चकारो ऽसंस्कृतानां शूद्रत्वं 'चतुर्थो वर्ण' इत्यादिविरुद्धमित्याह ॥ ३८ ॥

ननु गौतमस्याऽव्रतस्य प्रेरणमित्यत आह—

## श्रवणाऽध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥३९॥

श्रवणं चाऽध्ययनं चाऽर्थश्च। अर्थशब्देन वेदार्थज्ञानाऽनुष्ठानयोः प्रतिषेधः। श्रवणाऽध्ययनार्थास्तेषां प्रतिषेधः श्रूयते श्रवणप्रतिषेधः 'अथ हाऽस्य भेद'मित्यादिना स्पष्टं स्मृतावुपलभ्यते, अर्थादध्ययनादेः। अतो नाऽव्रतंगौतमस्य किं तु न शूद्रस्याऽधिकारः। चकारादाचारादपि ॥ ३९ ॥

'शब्दादेवे'त्यस्मिन्नधिकरणे ब्रह्मवाक्ये जीवाऽनुवादो ब्रह्मैक्यबोधायेत्युक्तम्, इह तु प्राणस्य स्वरूपेण कल्पितस्य न ब्रह्मैक्यसम्भव इत्यतस्तदनुपपत्तौ प्राणोपासनमेव विधेयमिति प्रत्युदाहरणेन मण्डूकप्लुत्या ऽऽक्षिप्य समाधत्ते—

## कम्पनाच्च ॥ ४० ॥

'प्राण एजति' 'महद्भयं वज्रमुद्यत'मिति वज्रशब्दवाच्यं ब्रह्मैव। कुतः ? कम्पनात् चलनात् सर्वस्य जगतः प्राण इति शेषः ॥ ४० ॥

पूर्वाधिकरणे सर्वशब्दस्येवेह न कस्याश्चित् श्रुतेः सङ्कोचः। अथ वा प्रागिवेहापि 'स याव'दित्यादिश्रुत्या सङ्कोचा'त्तस्यावत्तदाक्षिप्ये'त्यादिना प्रसिद्धाऽऽदित्य एव ज्योतिरिति दृष्टान्तेनाक्षिप्य समाधत्ते—

## ज्योतिर्दर्शनात् ॥ ४१ ॥

परं ज्योतिः परमेव ब्रह्म। कुतः ? दर्शनात्। 'य आत्मा ऽपहतपाप्मे'त्यादिना अस्मिन् प्रकरणे ऽस्यैव दर्शनात् ॥ ४१ ॥

पूर्वाधिकरणे ब्रह्मप्रकरणादानर्थक्यप्रतिहतज्योतिःश्रुतितो ब्रह्मेत्युक्तम्, इह तु न ब्रह्मप्रकरणं नाप्याकाशश्रुतेरानर्थक्यं, ब्रह्मप्रतिपत्त्यर्थत्वादाकाशस्येति प्रत्युदाहरणेनाऽऽक्षिप्य समाधत्ते—

## आकाशो ऽर्थान्तरत्वादिव्यपदेशात् ॥ ४२ ॥

'आकाशो वै नामे'त्यत्राऽऽकाशशब्दः परमात्मा, ततः अर्थान्तरमाकाशस्तस्य भावस्तत्त्वम्। आदिशब्देन नामरूपनिर्वहणादिकं, तस्य व्यपदेशा'दाकाशं ब्रह्मे'त्युक्तं, तत्र भेदव्यपदेशो ऽनेकान्तः ॥ ४२ ॥

## सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४३ ॥

असत्यपि भेदे 'प्राज्ञेनात्मना सम्परिष्वक्त' इत्यादिना एतस्माच्छारीरात्पुरुषात्प्राज्ञस्य परमात्मनो भेद उत्क्रमणम् उत्क्रान्तिर्मृतिः 'तस्यामयं शारीर आत्मा प्राज्ञेनात्मना ऽन्वारूढ उत्सृजन् याती'त्यादिना निर्दिष्टाच्छारीरात्प्राज्ञस्य परमात्मनो भेदः। सुषुप्तिश्च उत्क्रान्तिश्च सुषुप्त्युत्क्रान्ती तयोर्भेदस्तेन ॥ ४३ ॥

ननु जीवपरात्मनोः प्रतीतौ कुतो नु जीवो न गृह्यते? इत्यत आह—

पत्यादिशब्देभ्यः ॥४४॥

पतिः सर्वस्याऽधिपतिः । आदिशब्देन सर्वस्य वशीत्यादि । पत्यादयश्च ते शब्दाश्च पत्यादिशब्दास्तेभ्यः ॥ ४४ ॥

इति ब्रह्मसूत्रदीपिकायां प्रथमाध्यायस्य तृतीयः पादः ।

:o:o:o:

पूर्वपादत्रये ब्रह्मणि समन्वय इत्युक्तम् । तथा हि-केषु चिद्वाक्येषु प्रधानादिवाचकशब्ददर्शनात् प्राधानादावपि कश्चन समन्वयः स्यादित्याक्षिप्य ब्रह्मण्येव समन्वय इति अवधार्यते ऽनेन पादेन ।

आनुनानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥१॥

अनुमानप्रतिपाद्यमानुमानिकं प्रधानमपि केषांचित्कठानां शाखायां 'महतः परमव्यक्त'मितिशब्दवदिति यदि तन्न । कुतः ? शरीररूकविन्यस्तगृहीतेः । शरीरं ह्यत्र रथरूपकेण विन्यस्तमित्युक्तं तस्य शब्देन गृहीतेः ग्रहणात् दर्शयति च । तथा ह्यनन्तराऽतीतो ग्रन्थ आत्मशरीरादीनां रथिरथादिरूपकक्लृप्तिं दर्शयति। चकारात्प्रकरणादिकं च ॥ १ ॥

स्थूलं शरीरं कथमव्यक्तशब्दार्हमित्यत आह—

सूक्ष्मं तु तदर्हत्वात् ॥२॥

सूक्ष्मं सूक्ष्मशरीरमव्याकृताख्यम् । तुशब्द एवकारार्थः । कुतः ? तदर्हत्वात् । तस्याऽव्यक्तशब्दाऽभिधानस्याऽर्हं योग्यं तस्य भावस्तत्त्वं तस्मात् ॥ २ ॥

एवं चेत्स एव प्रधानवादः शब्दान्तरेणाऽऽपतित इत्यत आह—

तदधीनत्वादर्थवत् ॥ ३ ॥

तस्य परमेश्वरस्याऽधीनमायत्तं तस्य भावस्तत्त्वं तस्मात् सूक्ष्ममीश्वराधीनं नैव प्रधानमित्यर्थः । ईश्वर एव कारणमस्तु, एवं

सूक्ष्मशब्दाऽर्हस्याऽव्याकृतस्य व्यर्थं कल्पनं स्यादित्यत आह-अर्थवत्। अर्थः प्रयोजनं सो ऽस्यास्तीत्यर्थवत्। नेश्वरस्यापि तद्विना कारणत्वमस्तीत्यर्थः ॥ ३ ॥

तेन भोग्यत्वादस्तु तदधीनत्वं तस्यापीत्यत आह—

ज्ञेयत्वाऽवचनाच्च ॥४॥

ज्ञेयस्य भावो ज्ञेयत्वं, यथा सांख्यैरिष्टं प्रधानं नैवमस्य वचनं ज्ञेयत्वस्याऽवचनं ज्ञेयत्वावचनं तदधीनोपचारो ऽपि, अप्रत्यभिज्ञायमानत्वादित्यर्थः। चकारो ऽसत्त्वं स्वरूपस्याह ॥ ४ ॥

वदतीति चेन्न प्राज्ञो हि प्रकरणात् ५॥

ज्ञेयत्वाऽवचनमप्रसिद्धं, कुतः? निचाय्यमित्यनेन ज्ञेयत्वं वदति ब्रूते इति चेदेवं यदि तन्न। हि यस्मात् प्राज्ञः प्रकरणात्। तस्येति शेषः। प्रकरणं महावाक्यं 'पुरुषान्न परं किञ्चि'दित्यादिकम् ॥ ५ ॥

यथा ऽग्निजीवौ प्राज्ञस्यापि प्रकरणे तद्वत् प्रधानमपि स्यादित्यत आह—

त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥६॥

त्रयाणामग्निजीवपरमात्मनामेव च प्रधानस्य च एवमुपन्यासः। उत्तरम्। 'अग्नेर्लोकादि'मित्यादि जीवस्य 'तत' इत्यादिपरमात्मनो 'न जायते' इत्यादिप्रश्नोपि अग्नेः सत्त्वमग्निमित्यादिजीवस्य 'येयं प्रेते' इत्यादिपरमात्मनो 'ऽन्यत्र धर्मा'दित्यादिः। एवमनेन क्रमेण त्रयाणामेव न प्रधानस्य। आद्यश्चकारः प्रधानस्य स्वरूपाऽसत्त्वं समुच्चिनोति ॥ ६ ॥

ननु प्रधानं किञ्चदशाब्दमित्यत आह—

महद्वच ॥७॥

'महान्त'मित्याद्यैर्यथा सांख्याभिमतं महत्तत्वं न शब्दात्तेन महच्छब्देन तद्वत्प्रधानमपि नाऽव्यक्तशब्देन शब्द्यते। चकारस्त्वस्याप्यसत्त्वसूचनार्थः ॥ ७ ॥

पूर्वाधिकरणे ऽर्थतो ऽप्रत्यभिज्ञानात् नाऽव्यक्तशब्दवाच्यतेत्यु-

क,मिह तु त्रिगुणत्वादिना प्रधानस्य प्रत्यभिज्ञातःवपरो मन्त्र इति प्रत्युदाहरणेनाऽऽक्षिप्य समाधत्ते—

## चमसवदविशेषात् ॥ ८ ॥

'अजा'मित्यादिमन्त्रो न स्वातन्त्र्येण कस्य चिदर्थस्य प्रतिपादकः । अविशेषात् । अजादिशब्दानां न क चिदर्थविशेषो निरूपयितुं शक्यो विना प्रकरणादिकं, सो ऽयमविशेषस्तस्मात् । किंवदित्यत आह—चमसवत् । यथा 'ऽर्वाग्बिलश्चमस' इत्यस्मिन् मन्त्रे स्वातन्त्र्येण चमसपदं न कस्याप्यर्थस्य वाचकं तद्वदजादिपदानि ॥ ८ ॥

तर्हि कथमजादिः प्रतिपत्तव्ये? त्यत आह—

## ज्योतिरुपक्रमात्तु तथा ह्यधीयतएके ॥ ९ ॥

ज्योतिरुपक्रमे चक्षुर्ग्राह्यकार्यं प्रथमे यस्याः सा तेजोऽबन्नात्मिका प्रकृतिः । तुशब्दो ऽवधारणे । सैवाऽजा न पुनरन्या का चन । कुतः ? हि यस्मात् यथा ऽजामन्त्रे लोहितशुक्लकृष्णरूपा तथा तेजोऽबन्नात्मिकां प्रकृत्य 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्ये'त्यधीयते पठन्ति एके छन्दोगाः ॥ ९ ॥

रूढियोगयोरभावे ऽजाशब्दः कथं तेजोऽबन्नेषु प्रतिपत्तव्य? इत्यत आह—

## कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥१०॥

तेजोऽबन्नात्मिका लोहितशुक्लकृष्णात्मिका प्रकृतिर्या छागेव बहुबर्करीबर्करेण सेव्यमाना अपरेण त्यज्यमाना कल्प्यतइति कल्पना तस्या उपदेशः कल्पनोपदेशः, तस्मात् । नाप्यत्र विरोधः । न विरोधः अविरोधः कल्पनायाम् । दृष्टान्तः—मध्वादिवत् । यथा ऽऽदित्यस्य मधुत्वम् । आदिशब्दाद्वागादेर्धेन्वादेर्धेन्वादिमत्त्वं तद्वदनजायाः प्रकृतेरजात्वम् ॥ १० ॥

पूर्वाधिकरणे ऽजाशब्दो रूढियोगाऽभावात्कल्पनया तेजोऽबन्नादिपर इत्युक्तमिहापि पञ्चजनशब्दो रूढो मनुष्येषु यतो लक्षणया प्राणादिवाक्येनाऽन्वितः अतो ऽवयववृत्त्या प्रधानादिषु स्यादिति दृष्टान्तेनाऽऽक्षिप्य समाधत्ते—

## न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥

संख्यायाः यस्मिन् 'पञ्चपञ्चजना' इति पञ्चविंशतेरुपसंग्रहादपि स्वीकारादपि न प्रधानादीनां श्रौतत्वम् । कुतः ? नानाभावात्तेषां पञ्चपञ्चत्वे नियामकाऽभावान्नानात्वादेतेषामित्यर्थः । न केवलं नानात्वादतिरेकाच्च । अतिरेकः पञ्चविंशतिसंख्यायाः । आत्माऽऽकाशयोस्ततः पृथक् श्रवणात् । तस्मादपि ॥ ११ ॥

के पुनस्ते पञ्चपञ्चजना ? इत्यत आह—

## प्राणादयो वाक्यशेषात् ॥ १२ ॥

प्राण आदिर्येषां ते प्राणादयः प्राणचक्षुःश्रोत्रमनांसि । कुतः ? वाक्यशेषात् । यस्मिन् पञ्चपञ्चजना इति वाक्यस्य शेषः 'प्राणस्य प्राण'मित्यादि तस्मात् ॥ १२ ॥

कथं प्राणादयः पञ्चपञ्चजना भवेयुः ? ये ऽन्नं प्राणादिषु नाऽऽमनन्तीत्यत आह—

## ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

असत्यपि काण्वानामन्ने 'तद्देवा ज्योतिषां ज्योति'रित्यनेन ज्योतिषां तेषां पञ्चसंख्या पूर्यते ॥ १५ ॥

पूर्वाधिकरणे ऽन्नज्योतिषोर्विकल्पेनोपासानायां निर्विशेषाद्विरोध उक्तः, इह तु सिद्धे कारणे विकल्पाऽयोगात् विरोधे सत्यप्रमाणमिति प्रत्युदाहरणेनाऽऽक्षिप्य समाधत्ते—

## कारणत्वेन चाऽऽकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥

कारणस्य भावः कारणत्वं, तेनाकाऽऽशादिषु विषयेषु यथैकस्यां शाखायां व्यपदिष्टः 'सदेवे'त्यादिना तथा ऽन्यस्यामपि 'सत्यं ज्ञानमनन्त'मित्यादिनोक्तेरभिधानात् । चकारः कार्यस्यापि तथोक्तिसमुच्चयार्थः ॥ १४ ॥

'असद्वा इद'मित्यादिना ऽस्ति विगानमित्यत आह—

समाकर्षात् ॥ १५ ॥

प्रकृतैस्यव सत्यज्ञानादिलक्षणस्याऽऽकर्षणं प्रतिपादनमाकर्षः। तस्यङ्नामरूपादिराहित्येनाऽऽकर्षस्तस्मात् ॥ १५ ॥

पूर्वाधिकरणं 'सदेवे'त्यादिना एकवाक्येन सच्छब्दाऽनुसारेण सच्छब्दो नीतः, नैवमत्र किञ्चिन्नियामकं, जगद्वाचित्वेन कर्मशब्दस्येति प्रत्युदाहरणेनाक्षिप्य समाधत्ते—

जगद्वाचित्वात् ॥ १६ ॥

पुरुषाणां कर्ता परमेश्वरः। तस्य चैतत्कर्म। कर्मशब्दस्य जगद्वाचित्वात्। जगद्वक्तीति जगद्वाचि तस्य भावस्तस्मात् ॥ १६ ॥

जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥ १७ ॥

जीवस्य तद्यथा श्रेष्ठ्यादिप्राणस्य चा'ऽथास्मिन् प्राण एकधा भवति, इत्यादि लिङ्गं, तस्मात्परमात्मैवेति चैदेवं यदि तन्नोक्तं न, उपासात्रैविध्यादिति सूत्राऽवयवेन वाक्यभेदेन दोषेण व्याख्यातं निराकृतम् ॥ १७ ॥

ननु प्राणलिङ्गानां तदन्यभोक्तृत्वप्रतिपादनेनापि कथं चिदुपयोगः स्यान्न जीवपरामर्शस्य विना तज्ज्ञानमित्यत आह—

अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥

अन्यो ऽर्थः प्रयोजनं ब्रह्मनिर्धारणं यस्य परामर्शस्य सो ऽयमन्यार्थः। तमन्यार्थम्। तुशब्द एवकारार्थः। ब्रह्मनिर्धारणार्थमेव जीवपरामर्शः। तद्यथा 'श्रेष्ठ'इत्यादिर्न जीवस्य लिङ्गमिति जैमिनिराचार्यो मन्यते। कुतः? प्रश्नव्याख्यानाभ्याम्। 'क्वैष एतद्वा लोक'इत्यादिप्रश्नः। व्याख्यानं प्रतिवचनं 'अथास्मिन् प्राण एकधा भवती'त्यादि। प्रश्नश्च व्याख्यानं च प्रश्नव्याख्याने ताभ्यामपि चैवमेके वाजसनेयिनः। एवमनेन प्रकारेण प्रश्नो 'य एष विज्ञानमयः पुरुषः क्वैष तदा ऽभूत्' इति प्रतिवचने ऽपि 'य एषो ऽन्तर्हृदये आकाश' इति

परमात्मविज्ञानार्थं जीवं परामृशति ॥ १८ ॥

पूर्वाधिकरणे ब्रह्मोपक्रमात् ब्रह्मपरत्वं यथा तद्वदिहापि जीवोपक्रमात् जीवपरत्वमिति दृष्टान्तेनाऽऽशङ्क्य समाधत्ते—

## वाक्याऽन्वयात् ॥ १९ ॥

'आत्मा वारे द्रष्टव्य'इत्यादिनोक्तः परमात्मैव । कुतः ? वाक्यस्या'ऽमृतस्य तु नाशास्ति वित्तेने'त्यादेः अस्मिन्नेव परमात्मनि अन्वयः पर्यवसानं तात्पर्येण । तस्मात् ॥ १९ ॥

'आत्मनस्तु कामाय सर्वं प्रियं भवती'ति प्रियसमुच्चितस्य विज्ञानात्मनः प्रतीतेः का गति ? रित्यत आह—

## प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥

'आत्मनो वारे दर्शनेने'त्यादिप्रतिज्ञा तस्याः सिद्धिः तस्या लिङ्गं विज्ञानात्मनो द्रष्टव्यत्वादिसंकीर्तनं न तु वस्त्वभेदाऽभिप्रायमित्याश्मरथ्य आचार्यो मन्यते । कार्यकारणभावेनापि जीवपरमात्मनोरीषद्भेदस्य विद्यमानत्वात् ॥ २० ॥

## उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥

भेदेनाऽवस्थितस्य नामरूपाभ्यां 'तथा विद्वा'नित्यादिश्रुत्योत्क्रमिष्यतः तस्य नामरूपादिमुक्तस्यैव भेदस्याऽभावाद्विज्ञानात्मनो द्रष्टव्यत्वाऽभिधानमित्यौडुलोमिराचार्यो मन्यते । जीवब्रह्मणोर्भेदाऽभेदस्य विद्यमानत्वात् ॥ २१ ॥

## अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

'अनेन जीवेने'ति श्रुत्या परमात्मन एव जीवरूपेणाऽवस्थानमवस्थितिः तस्या विज्ञानात्मनो द्रष्टव्यत्वाऽभिधानमिति काशकृत्स्न आचार्यो मन्यते ॥ २२ ॥

जीवब्रह्मणोर्वस्तुतो भेदाऽभावात् 'एतेभ्यो भूतेभ्यः समुत्थाये'त्यादिना कुतो जीवस्याऽभिधान ? मित्यत आह–प्रतिज्ञादिसूत्रम् । पूर्वाधिकरणे प्रत्यभिज्ञां मुख्याम् आश्रित्य जीवपरत्वं वाक्यस्य निरस्तमिह निमित्तोपादानभेदात्सा गोणीत्याशङ्क्य समाधत्ते—

## प्रकृतिश्च प्रतिज्ञादृष्टान्ताऽनुपरोधात् ॥२३॥

प्रकृतिरुपादानं ब्रह्म । चकारेण निमित्तकारणमपि । कुतः ? 'येनाऽश्रुतं श्रुतं भवती'त्यादिप्रतिज्ञा 'यथा सौम्ये'त्यादिर्दृष्टान्तः । प्रतिज्ञा च दृष्टान्तश्च प्रतिज्ञादृष्टान्तौ तयोरुपरोधः पीड़नं सङ्कोचस्तद्विपरीतो ऽनुपरोधः तस्मात् ॥ २२ ॥

प्रकृतिनिमित्तं चेदेकं चेतनं प्रधानमेव कुतो न स्या?दित्यत आह—

## अभिध्योपदेशाच्च ॥ २४ ॥

'सो ऽकामयते'त्यादिना कारणस्य चैतन्यमभिध्या तस्या उपदेशस्तस्मात् । पुरुषाणां प्रधानाद्भिन्नत्वात्प्रतिज्ञाद्युपरोधोपि चकारेण समुच्चीयते ॥ २४ ॥

ननु श्रौताऽऽर्थापत्तिलभ्योभयकारणत्वस्य ब्रह्मणि प्रलयाश्रवणार्थापत्त्या प्रतिबाध इत्यत आह—

## साक्षाच्चोभयाऽऽम्नानात् ॥ २५ ॥

न प्रलयश्रवणलिङ्गमस्ति। कस्मात्? 'सर्वाणि ह वा इमानि भूतानी'त्यादौ साक्षादुभयस्योत्पत्तिप्रलयस्याऽऽम्नानाद्वेदेन ॥ २५ ॥

उभयकारणत्वे कर्मणोरैक्यं, कुत्र तदुपलब्ध?मित्यत आह—

## आत्मकृतेः परिणामात् ॥ २६ ॥

आत्मनः कर्मत्वेन कर्तृत्वेन च करणं कृतिः 'तदात्मान'मिति श्रौतकर्मत्वं 'स्वयमकुरुते'ति श्रौतकर्तृत्वं तस्याः सिद्धस्य कथं कार्यत्व?मित्यत आह-परिणामात् । क्षीरस्येव दधिरूपेण ॥

अथ वा परिणामादिति सूत्रान्तरम् । आत्मनं इति श्रुत्या निमित्तत्वमेव कुत उपादानत्वमपी?त्यतआह-परिणामात् । 'सच्चाऽसच्चे?ति श्रुत्या अन्यस्याऽन्याकारप्रतीतिः रज्ज्वा इव सर्पाकारस्तस्मात् ॥२७॥

नन्वस्त्वन्यरूपभवनं, न चोपादानत्व?मित्यत आह—

## योनिश्च हि गीयते ॥ २७ ॥

हि यस्माद्योनिश्चोपादानमपि 'यद्भूतयोनि'मित्यादिना गीयते पठ्यते ॥ २७ ॥

पूर्वाधिकरणे मृत्तिकादिदृष्टान्तात्प्रकृतिर्ब्रह्मेत्युक्तम्, इहापि प्रधानादिभेदादिनिदर्शनान्नानाविवादा इत्याक्षिप्याऽतिदेशेन समाधत्ते-

एतेन सर्वे व्याख्याता व्याख्याताः ॥२८॥

एतेन प्रधाननिराकरणेन सर्वे अपि वादा व्याख्याता निराकृताः। व्याख्यातपदाऽऽभ्यासो ऽध्यायपरिसमाप्तिं द्योतयति ॥ २८ ॥

इति श्रीमत्परहंसपारिव्राजकाचार्याऽऽनन्दात्मकपूज्यपाद-
शिष्यशङ्करानन्दभगवतः कृतौ ब्रह्मसूत्रदीपिकायां
प्रथमाऽध्यायस्य चतुर्थः पादः । संपूर्णश्च
प्रथमो ऽध्यायः ॥ १ ॥

———ooo———

पूर्वाध्याये सर्वोपनिषदां जगत्कारणे ब्रह्मणि समन्वय उक्त,स्तस्मिन् विरोधाऽऽशङ्कायामयमध्यायः। तत्रापि श्रुतिवत् स्मृतेराप्तोक्तत्वाच्च तद्विरोधाशङ्कां स्मृतिकाराणामपि कपिलस्य प्राधान्यात् प्रथमं तत्स्मृत्या विरोधमाशङ्क्य परिहरति—

स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नाऽन्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥

स्मृते'र्मूलप्रकृति'रित्यादेर्यो नाऽवकाशो ऽनवकाशः कर्मश्रुत्याद्यभावे प्रधानप्रतिपादकत्वमपि चेन्न स्यात्तदा ऽर्थाभावः स चाऽसौ दोषश्च स्मृत्यनवकाशदोषस्तस्य प्रसङ्गः प्राप्तिस्तस्मादिति चेदेवं यदि तन्न। कुतः? अन्यासां 'तस्मादव्यक्तमुत्पन्न'मित्यादीनां स्मृतीनामनवकाशो ऽर्थाऽभावः स चाऽसौ दोषश्चाऽन्यस्मृत्यनवकाशदोषस्तस्य प्रसङ्गस्तस्मात् ॥ १ ॥

इन्द्रियाणां सर्वप्रसिद्धत्वात्सहपठितानामव्यक्तादीनां मन्वादिस्मृतिविरोधेपि ग्रहणमित्यत आह—

इतरेषां चाऽनुपलब्धेः ॥ २ ॥

प्रधानादितराणि महदादीनि तेषामनुपलम्भनमनुपलब्धिस्तस्याः । लोकादेवेति शेषः । चकारो व्याप्यस्योपलब्ध्यभावव्यापकस्योपलब्ध्यभावसमुच्चयार्थः ॥ २ ॥

पूर्वाधिकरणे ऽपौरुषेयवेदतदनुसारिस्मृतिविरोधात्कपिलस्मृतेरप्रामाण्यादविरोधः समन्वयस्येत्युक्तम् । नन्वेवं योगस्मृतिर्विरोधिनी, सा च प्रधानादीन् प्रतिपादयति तथा समन्वयस्य विरोध इति प्रत्युदाहरणेनाऽऽशङ्क्याऽतिदेशेन समाधत्ते—

एतेन योगः प्रत्युक्तः ॥ ३ ॥

एतेन स्मृत्यनवकाशदोषप्रसङ्गेन योगो योगशास्त्रं प्रत्युक्तः निराकृतः ॥ ३ ॥

पूर्वाधिकरणे वेदविरुद्धाऽर्थस्मृतेर्वेदवैलक्षण्यादतन्मूलत्ववत् ब्रह्मवैलक्षण्याज्जगदप्यतन्मूलमिति दृष्टान्तेनाक्षिपति—

न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥

न ब्रह्म चेतनं जगतः कारणं, कुतो ? जगतो विलक्षणत्वात् । तथात्वञ्च जडत्वमप्यस्य जगतः 'अविज्ञानं च' त्यस्माच्छब्दाद्वाक्यात्सिद्धमित्यतो न जगतश्चैतन्यं कल्प्यमित्यर्थः ॥ ४ ॥

न कल्पयामि चैतन्यं, किं तु 'ता आपो ऽब्रुव' न्नित्यादिनोपलभ्यतद्दृश्यत आह—

अभिमानिव्यपदेशस्तु विशेषाऽनुगतिभ्याम् ॥ ५ ॥

तुशब्दः शङ्कानिवृत्त्यर्थः । अभिमानिनीनां देवतानां व्यपदेशो ऽभिमानिव्यपदेशः । नाऽबादीनाम् । कुतो? भोक्तृभोग्यरूपो विशेषः । अथ वा 'एता ह वै, इति देवताशब्दो विशेषः । 'अग्निर्वाग्भूत्वे' त्यादिना ऽनुगमनमनुगतिः । विशेषश्चाऽनुगतिश्च विशेषाऽनुगती ताभ्याम् ॥ ५ ॥

दृष्टान्तमाह—

दृश्यते तु ॥ ६ ॥

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । दृश्यते लोके चेतनात् केशादि, अचेतनाद् गोमयादेर्वृश्चिकादि, वेदे ऽपि 'यथा सत' इत्यादिदृष्टान्ताच्चेतनस्याऽचेतनकारणत्वम् ॥ ६ ॥

## असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

निर्गुणे ब्रह्मणि प्रागुत्पत्तेर्जगतो ऽभावादसत्कार्यमिति चेदेवं यदि तन्न । कुतः ? प्रतिषेधमात्रत्वात् कारणात्मना कार्यस्य विद्यमानत्वात् प्रतिषेध्याऽभावेन प्रतिषेधमात्रत्वादसत् कार्यमिति शब्दस्य ॥ ७ ॥

## अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥

स्थूलादिगुणकस्य कार्यस्य ब्रह्मणो ऽभेदे ऽपीतौ प्रलये ब्रह्मणो ऽपि तद्वत्त्वप्रसङ्गः । स्थूलादिमत्त्वप्रसङ्गः । तस्मात् । अथ वा तत्प्रसङ्गादभेदप्रसङ्गात् । भोक्तृभोग्यौघभावप्रसङ्गेन । अथ वा तदभिन्नानां मुक्तानामपि तद्वत्प्रसङ्गात् पुनरुत्पत्त्यादिप्रसङ्गात् । अथ वा भेदसद्भावे तद्वत्प्रसङ्गात्कारणवत् प्रलयाऽभावप्रसङ्गादसमञ्जसमसमीचीनमौपनिषदं दर्शनम् ॥ ८ ॥

## न तु दृष्टान्तभावात् ॥ ९ ॥

तुशब्द एवकारार्थः । त्वदुक्तं नैव । कुतः? दृष्टान्तस्य आद्ये स्थूलस्य घटादेः पृथिव्यादिकं प्रविशतः, द्वितीये विभागस्य तेन सुषुप्तावुत्थितस्य, तृतीये तद्देहादेस्तदनुत्पादेन च सांख्यादेः, चतुर्थे घटाऽद्यवस्थानस्याऽभावेन भावात्मकत्वात् । अथ वा त्वत्पक्षे दृष्टान्तस्याऽभावादेव ॥ ९ ॥

## स्वपक्षदोषाच्च ॥ १० ॥

स्वस्य प्रतिवादिनः पक्षः तस्मिन्विलक्षणत्वादेर्दोषात् । चकारो ऽन्यत्र दोषाऽभावसमुच्चयार्थः ॥ १० ॥

तर्कतस्तावत् स्वपक्षे परिहरिष्याम इत्यत आह—

## तर्काऽप्रतिष्ठानादन्यथाऽनुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः ॥ ११ ॥

तर्कस्य युक्तेरेकेनोक्तायाः परेण दूषणादप्रतिष्ठानमनवस्थितिस्तस्मात्। अन्यथा प्रतिष्ठितत्वे कस्य चित्तर्कस्य स्वरूपमनुमानादवगन्तव्यमितिं चेद्यदि प्रतिष्ठितत्वे ऽप्यवैदिकप्रधानप्रतिपादकतर्कस्याऽप्रतिष्ठितत्वादविमोक्षप्रसङ्गः। प्रतिष्ठितत्वस्याऽपरित्यागप्राप्तेः। अथ वा कपिलस्य सर्वज्ञत्वात्तदीयतर्कस्याऽन्यथाप्रतिष्ठितत्वमपि चेदेवमपि सर्वज्ञानां बहुत्वात् सर्वज्ञभावितत्वे ऽप्यप्रतिष्ठितत्वमेवाऽतो विना वेदं तर्कतस्तत्त्वज्ञानाऽभावात्संसारादविमोक्षो मुक्त्यभावस्तस्य प्रसङ्गः॥ ११॥

पूर्वाधिकरणे ऽत्यन्तवैलक्षण्ये कार्यकारणभावाऽनुपपत्तिवत् समाऽधिकपरिमाणत्वे कारणस्य तदनुपपत्तिरिति दृष्टान्तेनाऽऽक्षिप्य समाधत्ते—

## एतेन शिष्टाऽपरिग्रहा अपि व्याख्याताः॥१२॥

एतेन प्रधाननिराकरणेन शिष्टैर्न परिगृह्यन्तइति शिष्टाऽपरिग्रहा अण्वादिकारणवादा अपि व्याख्याताः निराकृताः॥ १२॥

पूर्वाधिकरणे जगत्कारणे तर्कों ऽप्रतिष्ठित इत्युक्तं, तर्हि जगद्भेदेन तर्कः प्रतिष्ठित इति प्रत्युदाहरणेनाक्षिप्य समाधत्ते—

## भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्॥१३॥

चेत् यदि ब्रह्म सर्वेणाऽभिन्नं भोग्यस्य भोक्तृत्वस्वरूपापत्तिः जीवाऽभिन्नेन ब्रह्मणा भोग्यस्याऽभेदात् भोक्त्रापत्तिस्तस्याः शङ्कायां नासौ दोषः स्यात्। अभेदेपि ब्रह्मणो भोक्तृभोग्ययोर्भेदः। लोकवत्। समुद्रादभिन्नतरङ्गबुद्बुदयोरिव॥ १३॥

पूर्वाधिकरणे भेदाऽभेदसमाश्रयणेन विरोधसमाधानं कृतमेकदेशिना, तेनैव विरोधमात्रमाशङ्क्य परिहरति—

## तदनन्यत्वमारम्भणशब्दादिभ्यः॥१४॥

तस्मात्कारणादनन्यत्वमभिन्नत्वं कार्यस्य। कुतः? आरम्भणशब्दादिभ्यः। आरम्भणशब्दो 'वाचारम्भण'मिति। आदिशब्दे- 'नैतदात्म्य'मित्यादयः। सच तदादयश्च तेभ्यः॥ १४॥

तयोरविनाभावान्न भेद इत्यत आह—

## भावे चोपलब्धेः ॥ १५ ॥

कारणस्य भावे च सत्त्वे एवं नाऽसत्त्वे कार्यस्योपलम्भनमुपलब्धिस्तस्याः। अतोऽविनाभावादनन्यत्वमित्यर्थः ॥ १५ ॥

उत्पत्तेः प्रागूर्ध्वं च कार्यस्याऽसत्त्वात् न कारणाऽनन्यत्वमित्यत आह—

## सत्त्वाच्चाऽवरस्य ॥ १६ ॥

अवरस्य कार्यस्य सत्त्वाच्च विद्यमानत्वादेव प्रागूर्ध्वं च वर्तमानत्वात्। अतो न त्वदुक्तम् ॥ १६ ॥

## असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥

असत्त्वस्य व्यपदेशोऽसद्व्यपदेशः 'असदेवे'त्यादिस्तस्मात्। असत्कार्यमिति चेदेवं यदि तन्न। कुतः? धर्मान्तरेणाऽव्यक्तरूपेणाऽस्तित्वं व्यपदिश्यते। कुतः? वाक्यशेषात्। वाक्यस्य शेषो वाक्यशेषः 'तत्सदासी'दित्यादिस्तस्मात् ॥ १७ ॥

उपक्रमाऽनुसारी वाक्यशेषः स्यादित्यत आह—

## युक्तेः शब्दान्तराच्च ॥ १८ ॥

दधिघटरुचकाद्यर्थिनां प्रतिनियतक्षीरमृत्तिकासुवर्णादिष्वेव प्रवृत्तिदर्शनादिरूपभाष्योक्तयुक्तेः 'सदेव सौम्येद'मित्यादिशब्दान्तराच्चोत्पत्तेः प्राक् कार्यस्य सत्त्वं कारणाऽनन्यत्वञ्च गम्यते ॥ १८ ॥

## पटवच्च ॥ १९ ॥

यथैकस्य पटस्य सङ्कोचप्रसारणाद्यवस्थास्वभेद एवमत्रापि कार्यकारणभावः। चकारो गोमहिषयोरिव भेदे कार्यकारणत्वाऽभावसमुच्चयार्थः ॥ १९ ॥

पूर्वाधिकरणे कार्यकारणयोरनन्यत्ववत् जीवपरयोरपि तत्। अस्त्वेकस्य कार्यकारणत्वं तथापि कारणाऽवस्थायां कार्यकृताऽर्थक्रिया किमिति न स्या?दित्यत आह—

## यथा च प्राणादि ॥ २० ॥

प्राणो ऽपान इत्यादि स यथा एक एव तत्तत्प्राप्य तत्तत् प्राणनाद्यर्थक्रियाकारित्वं समुश्चिनोति ॥ २० ॥

पूर्वाधिकरणे कार्यकारणयोरनन्यत्ववत् जीवपरयोरपि तत्सिद्धम्, इदानीं तेनैव विरोधमाह—

## इतरव्यपदेशाद्धिताऽकरणादिदोषप्रसक्तिः ॥२१॥

इतरस्य शारीरस्य ब्रह्मणो ऽनन्यत्वं 'तत्सृष्ट्वा तदेवाऽनुप्राविशत्' इत्याभ्यां ब्रह्मशारीराभ्यां व्यपदेशस्तस्मात्। हितस्याऽकरणं हिताकरम्। आदिशब्देन विपरीतकरणादिः। हिताऽकरणादेर्दोषस्य प्रसक्तिः प्रसङ्गः। ब्रह्मणः कारणत्वे तत्र सूत्रस्य पूर्वाऽवयवो हेतुः॥२२॥

## अधिकं तु भेदनिर्देशात् ॥ २२ ॥

'आत्मा वारे द्रष्टव्य' इत्यादिना कर्मकर्तृत्वादेर्भेदस्य निर्देशस्तस्मात् ॥ २२ ॥

एकस्मिन्नपि भेदो ऽनुपपन्न इत्यत आह—

## अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

यथैकस्य भूमेर्निरर्थका अश्मानो महार्हा मणयश्च आदिशब्देन व्रीह्यादयश्च परस्परं भिद्यमाना न तस्या भिद्यन्ते 'तद्वज्जीवा भिन्नाश्चापि न ब्रह्मणो भिद्यन्ते अतस्तस्य हिताऽकरणादेर्दोषस्याऽनुपपत्तिरप्रसङ्गः। चकारो भेदाऽभेदभावे कार्यसत्त्वउक्तश्रुत्यादिसद्भावसूचनार्थः ॥ २३ ॥

पूर्वाधिकरणे औपाधिकनानात्वेन समाधानं कृतम्, ईश्वरे तु तदपि नास्तीति प्रत्युदाहरणेनाक्षिप्य समाधत्ते—

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥२४॥

उपादानकारणस्य मृदादेरन्यस्य निमित्तस्य दण्डादेरसमवायिनश्च संयोगादेरुपसंहरणमुपसंहारः सन्निपातः तस्य दर्शनात् ब्रह्मणि त्वस्याऽविद्यमानत्वान्नोपादानं ब्रह्मेति चेत् एवं यदि तन्न। हि यस्मात् क्षीरवत् यथा क्षीरं बाह्यसाधनाद्यनपेक्षं परिणमते तद्वत् ब्रह्मापि॥२५॥

अस्त्वचेतनस्यैवं, न तु चेतनस्येत्यत आह—

## देवादिवदपि लोके ॥ २५ ॥

आदिशब्देन रूपादयः। यथा चेतना अपि देवादयो लोके बाह्यसाधनाऽनपेक्षास्तद्वद् ब्रह्मापि ॥ २५ ॥

पूर्वाधिकरणोक्तं परिणामित्वमाक्षिपति—

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥

ब्रह्म चेतनं चेत्परिणमते सर्वात्मना एकदेशेन वा? आद्ये कृत्स्नस्य ब्रह्मणः परिणामप्रसङ्गः, ततो ऽनित्यत्वम् । द्वितीये निरवयवत्वस्याऽभिधायकः शब्दो निरवयवत्वशब्दस्तस्य कोपो विरोधः। निरवयवत्वं न स्यादित्यर्थः ॥ २६ ॥

## श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । न कृत्स्नप्रसक्तिर्दोषः। कुतः? 'हन्ताऽहमिमा' इत्यादिना कार्याद् ब्रह्मणो व्यतिरेकश्रुतेः। न निरवयवत्वशब्दकोपः। 'यतो वा इमानि' 'निष्क्रिय'मित्यादिना कारणत्वस्य निरवयत्वस्य शब्दितत्वात् शब्दमूलत्वाच्च ब्रह्मवादस्य। शब्दो मूलं प्रमाणं यस्य सो ऽयं शब्दमूलः तस्य भावस्तत्त्वं तस्मात् ॥ २७ ॥

ननु शब्दोपि कथं विरुद्धं ब्रूते? इत्यत आह—

## आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

आत्मनि स्वप्नदृशि एवं स्वरूपाऽनुपमर्देन हि यस्मात् विचित्राः सृष्टयो 'न तत्र रथा' इत्यादिश्रुत्या स्वाऽनुभवेन च दृष्टाः। आद्यश्चकारो मायावादनिदर्शनसमुच्चयार्थः । द्वितीयो ऽनुपपत्तेरलङ्कारार्थः ॥ २८ ॥

## स्वपक्षदोषाच्च ॥ २९ ॥

स्वस्य प्रतिवादिनः पक्षः स्वपक्षः तस्य दोषः कृत्स्नप्रसक्तिस्तस्मात्। चकारो ब्रह्मवादिनस्तदभावसमुच्चयार्थः ॥ २९ ॥

पूर्वाधिकरणे स्वप्नदृष्टान्तेन मायावित्वादीश्वरस्य कारणत्वमुम्, इदानीं त्वशरीरस्य न मायेत्याक्षिप्य समाधत्ते—

सर्वोपेता च तद्दर्शनात् ॥ ३० ॥

अशरीरापि देवता सा मायाया आश्रयः । कुतः ? सर्वोपेता च सा यतः सर्वाभिः शक्तिभिरुपेता सर्वोपेतापि अशरीरैव । तदपि कुत ? इत्यत आह—तद्दर्शनात् । तस्य सर्वोपेतत्वस्य 'सर्वकर्मे'-त्यादिना दर्शनात् ॥ ३० ॥

विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥

करणरहितत्वं विकरणत्वं तस्मात् । परस्या देवताया हस्तपादादिशून्यत्वेन न सर्वकर्मत्वादिकमिति चेदेवं यदि चोदयसि तथोद्यं शब्दमूलत्वादित्युक्तं निराकृतम् ॥ ३१ ॥

पूर्वाधिकरणे प्रामाणिकत्वेनाऽशरीरस्यापि मायावित्वं जगत्कारणत्वं चाऽऽपादितम् । इदानीं जगत्कारणत्वमीश्वरस्याऽनुपपन्नं, प्रयोजनाऽभावात् इत्याक्षिपति—

न प्रयोजनवत्त्वात् ॥ ३२ ॥

न चेतनः स्रष्टा । कुतः ? चेतनसमीक्षायाः प्रयोजनवत्त्वात् । आप्तकामत्वाच्चेश्वरस्य न प्रयोजनं किं चित्सृष्टौ ॥३२॥

लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । लोकवत् । यथा लोके राजादीनामाप्तकामानां विना प्रयोजनं लीलायाः केवलायः भावो लीलाकैवल्यं लीलयैव केवलं तत्प्रवर्तते तद्वत् ॥ ३३ ॥

पूर्वाधिकरणे लीलया जगत्कारणत्वमुक्तमिदानीं कुर्वतो वैषम्यादित्याक्षिप्य समाधत्ते—

वैषम्यनैर्घृण्ये न साऽपेक्षत्वात् तथा हि दर्शयति ॥ ३४ ॥

विषमस्य भावो वैषम्यं केषां चित्सुखं केषां चिद् दुःखं केषां चिदुभे अपि। निर्घृणस्य भावो नैर्घृण्यं जगत्संहर्तृत्वादि, वैषम्यञ्च नैर्घृण्यं च वैषम्यनैर्घृण्ये नेश्वरस्य। कुतः ? धर्मसापेक्षतः सुखमधर्मसाऽपेक्षतो दुःखमुभयसापेक्षतः सुखदुःखादि च करोति। यतः सापेक्षस्य भावः सापेक्षत्वं हि यस्मात् यथा भवति तथा दर्शयति श्रुतिः 'एष ह्येवे'त्यादिना, स्मृतिरपि 'ये यथे'त्यादिना ॥ ३४ ॥

## न कर्माऽविभागादिति चेन्नाऽनादित्वात्॥३५॥

प्रथमतो जगत उत्पत्तौ नेश्वरस्य कर्मसापेक्षता। कुतः ? यत उत्पत्तेः प्राक् न कर्म्म सुकृतं दुष्कृतम्। तदेव कुतः ? 'सदेवे'त्यादिना उत्पत्तेः प्रागविभागादिति चेत्। एवं यदि तन्न। प्राथम्याऽनुपपत्तेः। अनादित्वात्संसारस्य। न विद्यते आदिर्यस्य सो ऽयमनादिस्तस्य भावस्तत्त्वं तस्मात् ॥ ३५ ॥

तदेव कथ ? मित्यत आह—

## उपपद्यते चाऽप्युपलभ्यते च ॥ ३६ ॥

संसारस्याऽनादित्वमुपपद्यते, अन्यथा कृतनाशाऽकृताऽभ्यागमप्रसङ्गात्। उपलभ्यतेपि 'सूर्याचन्द्रमसा'वित्यादौ स्मृतौ च 'नान्तो न चादि'रित्यादौ। आद्यश्चकारो विपर्ययप्रमाणाऽभावार्थः। द्वितीयश्चकारः प्रसिद्धविरोधार्थः ॥ ३६ ॥

पूर्वाधिकरणे विषयस्रष्टृत्वस्याऽनेकान्तता उक्ता, तेनैव निर्गुणस्याऽनुपादानत्वमिति प्रत्युदाहरणेनाऽऽक्षिप्य समाधत्ते—

## सर्वधर्मोपपत्तेश्च ॥ ३७ ॥

सर्वे धर्माः सर्वधर्माः तेषामुपपत्तिस्तस्याः। निर्गुणस्यापि जगत्कारणत्वं भ्रमाधिष्ठानत्वेन रज्ज्वादेरिव सर्वधर्मोपपत्तेरेव ॥ ३७ ॥

इति ब्रह्मसूत्रदीपिकायां द्वितीयऽध्यायस्य प्रथमः पादः ॥

—*—

पूर्वस्मिन्पादे वेदान्ताऽननुग्राहकाः सांख्यादितर्का निरस्ताः, इदानीं तेषां मध्ये वेदान्तनिरपत्ता ये तैः समन्वयस्य विरोधमाशङ्क्य तेषां दुष्टत्वप्रदर्शनेनाऽविरोधमाह द्वितीयेन पादेन। अत्रापि सांख्यस्मृतिवत्तर्कप्राधान्यमङ्गीकृत्य तन्निरस्यति—

## रचनाऽनुपपत्तेश्च नाऽनुमानम् ॥ १ ॥

अनुमीयतइत्यनुमानं प्रधानं जगत्कारणं न। कुतः? तस्याऽचेतनत्वेन जगतो गिरिनदीसमुद्रादेः रचनायाः सन्निवेशकरणस्याऽनुपपत्तेः। चकारो ऽन्वयाद्यनुपपत्तिं समुच्चिनोति ॥ १ ॥

## प्रवृत्तेश्च ॥ २ ॥

आस्तां तावदियं रचना तत्सिद्ध्यर्थां, प्रवृत्तिः साम्याऽवस्थातः प्रच्युतिस्तस्या अचेतनस्य प्रधानस्य चेतनाऽनधिष्ठितस्याऽनुपपत्तेः ॥ २ ॥

## पयोऽम्बुवच्चेत्तत्रापि ॥ ३ ॥

पयो यथा अचेतनं वत्सविवृद्ध्यै, अम्बु वा निम्नदेशगमनाय प्रवर्तते तद्वत् प्रधानमपि प्रवर्तिष्यतइति चेदेवं यदि तन्न। तत्रापि पयसि वत्सस्याऽम्बुनि मेघभेदकस्येश्वरस्य च समाश्रयणं यतः ॥३॥

अस्तु प्रधाने सत्त्वांशः प्रवर्तक इत्याह—

## व्यतिरेकाऽनवस्थितेश्चाऽनपेक्षत्वात् ॥४॥

सत्त्वप्रधानव्यतिरेकेणाऽनवस्थितेरनवस्थानात् बाह्यस्याऽनपेक्षत्वात् सातत्येन महदादीनामुत्पादः स्यादिति शेषः। चकारो ऽपसिद्धान्तमाह ॥ ४ ॥

तृणादेः क्षीराद्याकारपरिणामवन्न सातत्यमित्यत आह—

## अन्यत्राऽभावाच्च न तृणादिवत् ॥ ५ ॥

नायं तृणपल्लवादिदृष्टान्तो ऽप्यचेतनं जगत्कारणं साक्षात्कारणं साधयति। यतो ऽचेतनस्य तृणपल्लवादेः स्वतन्त्रस्य न क्षीरं परिणामो ऽपि। कुतः? अन्यत्र बलीवर्दादिभक्षिते परित्यक्ते वा क्षीरप-

रिणामस्याऽभावात् । चकारः प्रधानस्य स्वरूपाऽसत्त्वसमुच्चयार्थः ॥ ५ ॥

## अभ्युपगमे ऽप्यर्थाऽभावात् ॥ ६ ॥

पूर्वं प्रधानस्य प्रवृत्तिर्नोपेयतइति स्थितम्, इदानीं तत्प्रवृत्तेरभ्युपगमेपि अर्थस्य प्रयोजनस्य निमित्तान्तराऽभाववत् पुरुषे भोगादेरसम्भवेनाऽभावात् ॥ ६ ॥

## पुरुषाश्मवदिति चेत् तथापि ॥ ७ ॥

पुरुषावन्धपङ्गू, तत्राऽन्धमधिष्ठाय प्रवर्तते इति पङ्गुः प्रवर्तको ऽयस्कान्तो वा यथा स्वयम् प्रवृत्तस्तद्वदप्रवृत्तोपि पुरुषः प्रवर्तयिष्यतीति चेत्तत्रापि सान्निध्यादयश्च दोषाः प्रसज्येरन् ॥ ७ ॥

अङ्गी गुणः प्रवर्तको ऽस्त्वित्यत आह—

## अङ्गित्वाऽनुपपत्तेश्च ॥ ८ ॥

सत्त्वादीनां साम्ये ऽङ्गित्वस्याऽनुपपत्तेः । चकारो जडत्वप्रयुक्तं सामान्यदूषणं समुच्चिनोति ॥ ८ ॥

साम्याऽवस्थायामपि वैषम्ययोग्या गुणास्तेनैकवाक्यतावशादङ्गित्वमपि स्यादित्यत आह—

## अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॥९॥

अन्याऽनुमितौ कार्यवशेनाऽङ्गित्वाद्यनुमितौ तस्य च चैतन्याऽवस्थानत्वे तदस्मिन्न सम्भवति । कुतः ? ज्ञशक्तेर्वियोगो ऽभावस्तस्मात् । पुरुषस्यैव चेतनत्वादित्यर्थः । न चाऽनुमानमपि सिद्ध्यतीति चकारार्थः ॥ ९ ॥

सत्त्वगुणत्वात् ज्ञानस्य तच्छक्तिरप्यविरुद्धेत्यत आह—

## विप्रतिषेधाच्चाऽसमञ्जसम् ॥ १० ॥

जडं ज्ञशक्ति च एवं ग्रन्थेष्वपि क्व चित्सप्तेन्द्रियाणि क्व चिदेकादशेत्यादिविप्रतिषेधः । तस्मादिदं साङ्ख्यदर्शनमसमञ्जसम् ॥१०॥

पूर्वाधिकरणे प्रधानगुणाऽनन्वयात् जगन्न तत्प्रकृतिकमित्युक्त-

म, इहापि चैतन्याऽनन्वयात् न चेतनप्रकृतिकमित्याक्षिप्य समाधत्ते—

## महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥११॥

यथा परमाणोः परिमण्डलादणु ह्रस्वं च द्व्यणुकम्। अणोः ह्रस्वाच्च द्व्यणुकान्महद्दीर्घं च त्र्यणुकादि, तद्वच्चेतनमपि ब्रह्माऽचेतनस्याऽऽरम्भकमस्तु ॥ ११ ॥

पूर्वाधिकरणे प्रधानस्य स्वातन्त्र्यान्न जगतां कारणत्वम्, इह त्वणूनामीश्वरस्याऽधिष्ठातुः सत्त्वात्कारणत्वमिति प्रत्युदाहरणेनाक्षिप्य समाधत्ते—

## उभयथापि न कर्माऽतस्तदभावः ॥ १२ ॥

उभयथाप्याद्यस्य कर्मणो निमित्तस्याऽभावेपि दृष्टस्याऽदृष्टस्य वा दृष्टस्यापि प्रयत्नस्याऽभिघातादेवाऽदृष्टस्याप्यात्मसमवायिनो वा दृष्टवदात्मसंबन्धस्यापि सदातनत्वेन प्रलयाद्यभावदोषात् नाद्यं कर्माऽणुषु। अत आद्यस्य कर्मणो ऽभावात् तज्जनकस्यापि तस्य संयोगस्याऽभावः असत्त्वं, तदभावाच्च संयोगसचिवाः परमाणवो न द्व्यणुकादिक्रमेण जगदारभन्ते इत्यर्थः ॥ १२ ॥

## समवायाऽभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥

पूर्वं संयोगस्य निमित्ताऽभाव उक्तः, इदानीं सम्बन्धाऽभावः। समवायस्याऽभ्युपगमो ऽङ्गीकारस्तस्मात्। संयोगस्य यथा समवायः एवं समवाये ऽपि समवायः समानत्वात्संबन्धत्वस्य भेदस्य च। कुतः? समवाये ऽपि समवायं प्रत्यनवस्थानमनवस्थितिस्तस्याः। चकारः संयोगस्य समवायाऽनङ्गीकारे राद्धान्तविरोधादि समुच्चिनोति॥१३॥

अस्तु तर्हि परमाणव एवाद्यस्य कर्मणो निमित्तमित्यत आह—

## नित्यमेव च भावात् ॥ १४ ॥

अणूनां प्रवृत्तिस्वभावत्वे सर्गस्य निवृत्तिस्वभावत्वे प्रलयस्योभयस्वभावत्वे कार्यस्य पूर्वाऽपरकालवैकल्यस्याऽनुभयस्वभावत्वे

निमित्तस्य नित्यं सर्वदा भावात् प्रलयाद्यभावदोषः। चकारः पूर्व-सूत्रवत् ॥ १४ ॥

अस्त्वागन्तुकं निमित्तं नित्यानामणूनामित्यत आह—

**रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥१५॥**

नित्यस्य विपर्ययोऽनित्यत्वम् अणूनाम्। कुतः? रूपादिमत्त्वात्। रूपादिमतां घटादीनामनित्यत्वदर्शनात्। चकारः कर्मव्यतिरिक्तस्य निमित्तस्य दुर्लभत्वं समुच्चिनोति ॥ १५ ॥

घटादीनां परिमाणतारतम्यादस्त्वनित्यत्वमणूनां, समानपरि-णामत्वादात्मादिवत् नित्यत्वमित्यत आह—

**उभयथा च दोषात् ॥ १६ ॥**

समानपरिमाणत्वे वायवीयानामपि रूपरसगन्धस्पर्शसद्भावो दोषः। असमानपरिमाणत्वे हेतोरसिद्धिदोषः। चकारस्त्वनैकान्तिकत्वसमुच्चये ॥ १६ ॥

ननु शाश्वतीयत्वादिदं मतमङ्गीकरणीयमित्यत आह—

**अपरिग्रहाच्चाऽत्यन्तमनपेक्षा ॥ १७ ॥**

न परिग्रहोऽपरिग्रहः सांख्यादिवादस्य सत्कार्याद्यंशे परिग्रहः, सोऽप्यस्य न, तस्मादत्यन्तमनपेक्षा शिष्टैः परिग्रहोऽणुमात्रमपि न कृत इत्यर्थः। चकारस्त्वप्रयुक्तत्वसमुच्चयार्थः ॥ १७ ॥

पूर्वाधिकरणेऽर्धवैनाशिका निरस्ताः, अस्तु तेषां निरास उभय-भ्रष्टत्वात्, न बाह्यार्थवादिनो वैनाशिकास्तथेत्याक्षिप्य समाधत्ते—

**समुदायउभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥**

चतुर्विधोऽणुहेतुकश्च भूतभौतिकसंहतिरूपः समुदायः रूपवेदनाविज्ञानसंज्ञासंस्कारहेतुकश्च पञ्चस्कन्धीरूपः, तस्मिन्नुभयहेतुकेऽपि समुदायिनां समुदायेऽभिप्रेयमाणे तदप्राप्तिस्तस्य समुदायस्याऽप्राप्तिरसिद्धिरचेतनत्वात्, समुदायस्य चाऽवस्तुत्वात्, अस्य स्थिरस्य चेतनस्य संहतेरसत्त्वात् ॥ १८ ॥

**इतरेतरप्रत्ययत्वादिति चेत् नोत्पत्तिमात्र-निमित्तत्वात् ॥ १९ ॥**

अविद्यासंस्कारविज्ञानादीनां स्थिरस्य चेतनस्याऽसत्त्वे ऽपि इतरेतरप्रत्यय इतरेतरकारणत्वं तस्मादिति चेत् न । उत्पत्तिमात्रनिमित्तत्वात् । उत्पत्तौ केवलं निमित्तमविद्या तदितरेतरत् न तु संघातोत्पत्ताविति मात्रशब्दार्थः ॥ १९ ॥

**उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥**

उत्पत्तिमात्रनिमित्तत्वमुक्तं, तदप्यसम्भवि, उत्तरस्य कार्यस्योत्पादे उत्पत्त्यवसरे पूर्वस्य निरोधादसत्त्वात् । चकार उत्पत्त्यसद्भावसमुच्चयार्थः ॥ २० ॥

असत्ये कारणे कार्यस्योत्पादो ऽस्त्वित आह—

**असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥२१॥**

असति कारणे कार्यस्योत्पादे प्रतिज्ञायाश्चतुर्विधान् हेतून्वा प्रतीत्य च तदुत्पद्यते इत्यस्या उपरोधो बाधः । अन्यथा कार्यस्य क्षणे कारणस्य सत्त्वे कार्यकारणयोर्यौगपद्यं तत्रापि क्षणिकाः सर्वे संस्कारा इति प्रतिज्ञोपरोधः ॥ २१ ॥

मा भूद्वैनाशिकानां सन् पदार्थः, असंस्तु स्यादित्यत आह—

**प्रतिसंख्याऽप्रतिसंख्यानिरोधाऽप्राप्तिरविच्छेदात् ॥ २२ ॥**

बुद्धिपूर्वको निरोधः प्रतिसंख्यानिरोधः, तद्विपरीतो ऽप्रतिसंख्यानिरोधः निरोधो ऽसन्पदार्थः सुगतानामभिहितः, तस्य निरोधस्य सन्तानस्य नित्यत्वात् सन्तानिनां च विनाशस्य कर्त्तुमशक्यत्वात् अभावेनास्यैवाऽसत्त्वं प्रतिसङ्ख्यानिरोधश्चाऽप्रतिसङ्ख्यानिरोधश्च तयोः प्राप्तिर्निरोधाऽभावात् । स एव कथ ? मित्यत आह—अविच्छेदात्, सन्तानसन्तानिनोः ॥ २२ ॥

न केवलं निरोधाभावो ऽविद्यादीनां प्रतिसंख्यानिरोधो, निमित्तमपि नास्तीत्याह—

**उभयथा च दोषात् ॥ २३ ॥**

उभयथा यदि ज्ञानेन निर्हेतुकविनाशाऽभ्युपगमदोषश्चेद् विनैव ज्ञानेन ज्ञानतत्साधनोपदेशवैयर्थ्यदोषस्तस्मात् । चकारस्त्वप्रतिसङ्ख्यानिरोधसङ्करसमुच्चयार्थः ॥ २३ ॥

आवरणाऽभावस्याऽऽकाशस्य यथा सतोङ्गीकारस्तद्वन्निरोधयोरप्यङ्गीकारः किं न स्यादित्यत आह—

**आकाशे चाऽविशेषात् ॥ २४ ॥**

आकाशे ऽप्यसत्त्वमनुपपन्नं निरोधयोरिव । यथा गन्धादयो गुणाः पृथिव्यादयो भावास्तथा शब्दगुणोप्याकाशो भावः, अविशेषात् । चकार एवाऽनेकाऽऽवरणभावाऽनुपपत्त्यादि समुच्चिनोति ॥ २३ ॥

विज्ञानस्य क्षणिकत्वात् तद्दृष्टान्तेनाऽसर्वज्ञस्य क्षणिकत्वात् तत्प्रणालिकया ऽसत्त्वं सेत्स्यतीत्यत आह—

**अनुस्मृतेश्च ॥ २५ ॥**

अनुभवमनु जायमाना स्मृतिस्तस्याः कर्तुः स्वाऽनुभवस्मृत्योरेकाधिकरणत्वात् दृष्टान्तेनान्येषामपि । चकारो ज्ञानस्यापि क्षणिकस्वभावसमुच्चयार्थः ॥ २५ ॥

कार्यमेवाऽसन्तं पदार्थं साधयिष्यति, 'नाऽनुपमृद्य प्रादुर्भावा'दिति न्यायादित्यत आह—

**नाऽसतो ऽदृष्टत्वात् ॥ २६ ॥**

असतो ऽविद्यमानान्मृदादेर्घटादिकं न जायते । कुतः ? मृदादेरसत्त्वे घटादेरदृष्टत्वात् ॥ २६ ॥

पिण्डादेरुपमर्दादेव घटादिकार्यस्योत्पाद इत्यत आह—

**उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥**

एवमभावाद्भावोत्पत्तौ कुसूलनिहितकुल्माषाणामुदासीनकृषीवलानां कृषिमकुर्वतामपि सिद्धिः कृतकृत्यता शाल्यादिकं सम्पन्नं स्यादित्यर्थः । चकारः पिण्डादीनां कारणत्वसमुच्चयार्थः ॥ २७ ॥

पूर्वाधिकरणे समुदायाऽनुपपत्त्यादिना बाह्यार्थवादी निराकृतः, इदानीं विज्ञानवादी ताभिरेवोपपत्तिभिः प्रत्यवतिष्ठमानो निराक्रियते—

## नाऽभाव उपलब्धेः ॥ २८ ॥

बाह्यानामर्थानां नाऽभावो ऽसत्त्वम् । कुतः ? तेषां कुम्भादीनां तत्तत्प्रत्ययैरुपलम्भनमुपलब्धिः, तस्याः ॥ २८ ॥

ज्ञानाऽऽकाराणामेव तेषां स्वप्नवदुपलम्भः स्यादित्यत आह—

## वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥

विरुद्धधर्मयोर्भावो वैधर्म्यं बाध्यत्वाऽबाध्यत्वेन । तस्मान्नायं स्वप्नादिवद्बाह्यो ऽर्थो ज्ञानाकारः । आदिशब्देन मायारचनादिकम् । चकारः श्रुतेरप्रामाण्यं समुच्चिनोति ॥ २९ ॥

अबाध्यत्वं विचित्रार्थोपलम्भाद्विचित्रश्चार्थो वासनाविलास इत्यत आह—

## न भावो ऽनुपलब्धेः ॥ ३० ॥

वासनानां विचित्राणां न भावो न सत्त्वम् । कुतः ? अनुपलब्धेः । बाह्यानामर्थानामभावात् ॥ ३० ॥

मा भूद्बाह्यार्थे, आलयविज्ञानवशादेव वासनानां विचित्राणां सत्त्वमित्यत आह—

## क्षणिकत्वात् ॥ ३१ ॥

आलयविज्ञानस्य स्थायिता ऽसिद्धा, अतः क्षणिकत्वादाश्रयाऽभाव इत्यर्थः । चकारो बाह्यार्थस्याऽसत्त्वे आलयविज्ञानस्याप्यसामर्थ्यमाह ॥ ३१ ॥

केनाप्यंशेन विज्ञानवादोत्पत्तौ तद्दृष्टान्तेन सौगतं मतमङ्गीकरणीयमित्यत आह—

## सर्वथा ऽनुपपत्तेश्च ॥ ३२ ॥

सर्वथा सर्वं क्षणिकमित्याद्यनुतिष्ठतां परस्यापि नेत्यादिशब्दतो ऽनुपपत्तेः। चकारो वेदविरोधसमुच्चयार्थः ॥ व. ह्या ऽर्थपदस्थाने दुर्ज्ञेयदुर्ज्ञानपदप्रक्षेपेण शून्यवादिनिराकरणमपि नाऽभाव इत्यादिसूत्रे करणीयम् ॥ ३२ ॥

पूर्वाधिकरणे उपलब्ध्यादिभिर्विज्ञानवादशून्यवादौ निराकृतौ, नैवं चिवसनानां समये अनेकत्वाश्रयणादिति प्रत्युदाहरणेन तद्विरोधमाशङ्क्य परिहरति—

## नैकस्मिन्नसम्भवात् ॥ ३३ ॥

जीवाऽजीवयोरास्रवसंवरनिर्जरबन्धमोक्षाणां पञ्चाऽस्तिकायानां जीवपुद्गलधर्मकारणत्वं समयकल्पितानामनेकभेदभिन्नानां संक्षेपतो द्वावेव पदार्थौ तद्व्यवस्थार्थः स्यादस्ति स्यान्नास्ति चेदवक्तव्यः स्यादस्ति चाऽवक्तव्यश्चेति इमं सप्तभङ्गीनयमुपपाद्यावतारयन्ति, एकत्वादौ चाष्टसु च व्यवस्थापकत्वं मन्यन्ते । तदिदं नोपपद्यन्ते । कस्मात्? एकस्मिन् धर्मिणि सत्त्वादीनां युगपद्वा ऽसम्भवात् ॥ ३२ ॥

## एवं चाऽऽत्माऽकार्त्स्न्यम् ॥ ३४ ॥

यथा सप्तभङ्गीनयादिकमनुपपन्नमेवमात्मनो ऽकार्त्स्न्यमसर्वगतपरिमाणमपि देहपरिमाणत्वे देहवत् स्यादित्यर्थः ॥ ३४ ॥

नियतपरिमाणस्यापि जीवस्याऽवयवाऽऽगमनिर्गमाभ्यां देहपरिमाणत्वमित्यत आह—

## न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥

न च पर्यायादागमनिर्गमने, तस्मादपि नैवाऽनित्यत्वाऽभावे विरोधः। कुतः? विकारादिभ्यः सूक्ष्मस्थूलादि आदिशब्देनाऽवयवानामात्मन्येवोत्पत्तिप्रलयस्थाननिरूपणत्वाऽनिरूपणत्वादयो दोषास्तेभ्यः। अथ वा परिणामाऽऽगमनिर्गमनयोरपि जीवस्य प्रवाहरूपेण नित्यत्वान्नायं दोष इत्यत आह—न च पर्यायादप्यविरोधो विकारा-

दिभ्यः । पर्यायात्परिमाणाऽऽगमनिर्गमरूपात् । अत्र चकारः सौगतमतोक्तदोषसमुच्चयार्थः । शेषं समानम् ॥ ३५ ॥

ननूक्तः सर्वो दोषो न जीवस्याऽनित्यत्वमावहति, किं तु तत्परिमाणस्याऽनित्यत्वादिकमित्यत आह—

## अन्त्याऽवस्थितेश्चोभयत्वादविशेषः ॥३६॥

अन्त्यस्य मोक्षाऽवस्थस्य परिमाणस्य नित्यत्वादवस्थानमवस्थितिः, तस्याऽनुभयस्यादिमध्यस्थस्य परिमाणस्य तद्धर्मित्वं, तस्मात्, अविशेषः । एकशरीरपरिमाणमेव तत् स्यात्, न चैतदिष्टं, तस्माज्जीवस्याप्यनित्यत्वम् । अथ वाऽन्त्यस्य जीवपरिमाणस्याऽवस्थितत्वात् पूर्वयोरप्यवस्थयोरवस्थितपरिमाण एव जीवः स्यात्, ततश्चाऽविशेषेण सर्वदैवाऽणुर्महान्वा जीवः स्यात् । चकारो जीवरूपत्वादिप्रसङ्गसमुच्चयार्थः ॥ ३६ ॥

पूर्वाधिकरणे यथा सत्त्वाऽसत्त्वयोरेकत्र विरोध उक्तः, एवमधिष्ठातृत्वोपादानत्वयोरेकत्र विरोध इति दृष्टान्तेनाक्षिप्य केवलनिमित्तत्वदूषणेन समाधत्ते—

## पत्युरसामञ्जस्यात् ॥ ३७ ॥

पत्युरीश्वरस्य न प्रधानपुरुषाद्यधिष्ठातृत्वम् । कुतः? असामञ्जस्यात् । समञ्जसस्य भावः सामञ्जस्यं न सामञ्जस्यमसामञ्जस्यं वैषम्यनैर्घृण्यकर्मेश्वरान्योन्याश्रयपरस्पराऽसङ्गत्वाऽभावादि । तस्मात् ॥ ३७ ॥

राजादिवदस्त्वधिष्ठातृत्वमित्यत आह—

## सम्बन्धाऽनुपपत्तेश्च ॥ ३८ ॥

नाऽत्र स्वस्वामिभावलक्षणः सम्बन्धस्तत्रैव विप्रतिपत्तेः । न च संयोगो निरवयवत्वात् । न च समवायः, तस्य कार्यकारणद्रव्यसम्बन्धत्वात् । एवमन्यस्यापि सम्बन्धस्याऽनुपपत्तिः । चकारः सम्बन्धस्याऽऽगन्तुकत्वाऽनागन्तुकत्वाद्यनुपपत्तिसमुच्चयार्थः ॥३८॥

## अधिष्ठानाऽनुपपत्तेश्च ॥ ३९ ॥

अधिष्ठातुः क्रिया ऽधिष्ठानं तच्च नाऽधिष्ठेयमन्तरेण, न वा स्वरूपेण, सन्दिग्धस्य रूपादिहीनस्य प्रधानादेरधिष्ठेयत्वाऽभावादधिष्ठानस्याऽनुपपत्तिस्तस्याः। चकारो ऽधिष्ठात्रधिष्ठानयोरपि स्वरूपाऽनुपपत्तिं समुच्चिनोति ॥ ३९ ॥

करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥

मा भूत्कुम्भकुलालादिवदधिष्ठेयाऽधिष्ठातृत्वं, करणवज्जीवेन्द्रियवद्भविष्यतीति चेन्न। कुतः? भोगादिभ्यः। भोगः सुखदुःखान्यतरसाक्षात्कारः। आदिशब्देन जन्ममरणादयः। तेभ्यो हेतुभ्यः। अथ वा ऽधिष्ठानस्य शरीरस्याऽनुपपत्तेरिति पूर्वसूत्रार्थः। द्वितीयसूत्रार्थस्तु करणमिन्द्रियं तदस्यास्तीति करणवत् शरीरं कल्प्यमिति चेत्। शेषं पूर्ववत् ॥ ४० ॥

ननु नैतानि सर्वगते सर्वज्ञे ईश्वरे चोद्यानीत्यत आह—

अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥

ईश्वरस्येति शेषः। यदीश्वरः प्रधानादीनामात्मनश्चेयत्तां परिच्छिनत्ति अन्तवान् स्यादसर्वज्ञश्च। न चेदसर्वज्ञत्वम् ॥ ४१ ॥

पूर्वाधिकरणे केवलनिमित्तत्वं निराकृतम्, अस्तु तर्ह्युपादानत्वमतिनिरङ्कुशं जीवस्य प्रपञ्चस्येति प्रत्युदाहरणेनाक्षिप्य समाधत्ते—

उत्पत्त्यसम्भवात् ॥ ४२ ॥

वासुदेवात्परस्मात्प्रकृतेः संकर्षणस्य जीवस्योत्पत्तेर्जन्मनो जातस्य मरणविशेषः, तत्र च जीवस्य कृतनाशाऽकृताऽभ्यागमप्रसङ्गादिः। अतो ऽसम्भवात्। न सम्भवो ऽसम्भवस्तस्मात् न भागवतमतं सम्यक् ॥ ४२ ॥

यथा सङ्कर्षणाज्जीवात् प्रद्युम्नस्य मनसो, यथा वा प्रद्युम्नान्मनसो ऽनिरुद्धस्याऽहं कृतेर्जन्म एवं वासुदेवादपि सङ्कर्षणस्योत्पत्तिरस्त्वित्यत आह—

न च कर्त्तुः करणम् ॥ ४३ ॥

कर्त्तुः सङ्कर्षणात्करणं प्रद्युम्नो न जायते, सङ्कर्षणस्यैव कर्तृत्व-

स्य विप्रतिपत्तेरित्यर्थः । चकारः प्रद्युम्नादप्यनिरुद्धोत्पत्त्यभावसूचनार्थः ॥ ४३ ॥

ननु सर्वज्ञत्वादिगुणानां संकर्षणादीनामुत्पत्तावपि नोत्पत्तिप्रसङ्गो दोष इत्यत आह—

विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥

वाशब्दश्चेदर्थः । यदि सर्वे सर्वज्ञाः सर्वगता अनन्तगुणाश्च वासुदेवादयस्तदा वासुदेवाद्युत्पत्त्यसम्भवदोषस्तदवस्थः । अतस्तस्याऽप्रतिषेधः ॥ ४४ ॥

तेषु संकर्षणादिषु वासुदेववद्विज्ञानादिगुणानां भावे ऽस्य शास्त्रविरोधं वेदविरोधं विना नाऽन्यविरोधं मन्यामहे इत्यत आह—

विप्रतिषेधाच्च ॥ ४५ ॥

अस्मिन्नेव शास्त्रे ज्ञानादीनां गुणत्वं तएव भगवन्तो वासुदेवा इत्यादिविप्रतिषिद्धं विरुद्धं चतुर्षु वेदेषु 'परं श्रेयो लब्ध्वा शाण्डिल्य इदं शास्त्रमधीतवा'नित्यादिवेदनिन्दादर्शनाद्वेदविरुद्धश्च । सो ऽयं प्रतिषेधः । तस्मात् । चकारो ऽन्यदूषणानामपि समुच्चयार्थः ॥४५॥

इति श्रीब्रह्मसूत्रदीपिकायां द्वितीयाऽध्यायस्य

द्वितीयः पादः ॥ २ ॥

——**——

द्वितीये पादे स्वतन्त्रतर्काणां परस्परविरोधान्न तैर्विरोधः समन्वयस्येत्युक्तं, तृतीयेन तु पादेन भूतश्रुतीनां भोक्तृश्रुतीनां च परस्परविरोधः परिह्रियते । तत्रापि भोक्तृत्वस्यौपाधिकत्वादुपाधिषु चाऽऽकाशस्य पूर्वोत्पत्तिश्रवणात् प्रथमं तद्विषयाणां विरोधपरिहारार्थमाक्षिप्यते—

न वियदश्रुतेः ॥ १ ॥

वियदाकाशं न जन्मवत् छान्दोग्ये तस्य जन्मनो ऽश्रुतेः ॥ १ ॥

## अस्ति तु ॥ २ ॥

तुशब्दो वियतो ऽनुत्पत्तिवारणार्थः । कुतः ? अस्ति तैत्तिरीयके आत्मनः सा ऽऽकाशश्रुतिर्यतः ॥ २ ॥

## गौण्यसम्भवात् ॥ ३ ॥

आकाशोत्पत्तिश्रुतिर्गौणी । कुतः ? तस्य समवाय्यसमावयिकारणस्याऽऽकाशपरमाणुतत्संयोगानामसम्भवात् ॥ ६ ॥

शब्दगम्ये ऽर्थे किमसम्भावने?त्यत आह—

## शब्दाच्च ॥ ४ ॥

'अन्तरिक्षं चैतदमृत'मित्यादौ । चकारो वेदेपि युक्तिसमुच्चयार्थः । एकस्य सम्भवपदस्यैकस्मिन् वाक्ये कथं गौणत्वं मुख्यत्वं चे?त्यत आह—

## स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥

एकस्यापि सम्भवपदस्य गौणार्थता ऽऽकाशे अन्येषु मुख्यता ब्रह्मशब्दस्य तपःप्रभृतिषु गौणार्थता परस्मिन् मुख्यार्थतैव स्यात् भवेत् ॥ ५ ॥

सिद्धान्तमाह—

## प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥

न वियदुत्पत्तिश्रुतिर्गौणी । कुतः ? कार्यकारणयोरव्यतिरेकादभेदात् । आकाशस्योत्पत्तौ ब्रह्मणस्तयोरभेदः स्यात्तथा प्रतिज्ञाहानिः प्रतिज्ञाया 'येनाऽश्रुतं श्रुत'मित्यादेरहानिरपरित्यागः । कार्यकारणाऽभेदेन । प्रतिज्ञाया अहानिरेव कुतो विवक्षिते?त्यत आह-शब्देभ्यः । 'येनाऽश्रुत'मित्यारभ्य 'ऐतदात्म्यमिदं सर्वं'मित्यन्ताश्छान्दोग्यशब्दाः । एवं सर्वत्र । तेभ्यः ॥ ६ ॥

तथापि तर्कविरोध इत्यत आह—

## यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥

यथा लोके घटादीनां भेदेन कार्यत्वमन्तरेणास्ति च कालादिभ्यो भेद आकाशस्य तस्मात् घटादिवत्कार्यः ॥ ७ ॥

पूर्वाधिकरणे यथैकविज्ञानेन सर्वविज्ञानप्रतिज्ञया न गौणीत्युक्तं तद्वत् 'सैषा ऽनस्तमिता देवता यद्वायु'रित्यादिका वायोर्नित्यत्वादिप्रतिपादिका श्रुतिर्न गौणीति दृष्टान्तेनाऽऽक्षिप्याऽतिदेशेन समाधत्ते-

## एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

एतेनाऽऽकाशोत्पत्तिकथनेन मातरिश्वा वायुरुत्पन्नो व्याख्यातः कथितः ॥ ८ ॥

पूर्वाधिकरणे यथा कारणस्याप्याकाशस्य कार्यत्वमुक्तं तद्वदिहापि कारणस्यापि ब्रह्मणः कार्यत्वमिति दृष्टान्तेनाक्षिप्य समाधत्ते—

## असम्भवस्तु सतो ऽनुपपत्तेः ॥ ९ ॥

तुशब्दो ब्रह्मण उत्पत्तिशङ्कानिराकरणार्थः । सतो ब्रह्मण उत्पत्तेरसम्भवः । कुतः ? 'न चाऽस्य कश्चित् जनिता' इत्यादिश्रुतेः । युक्तितश्च तत्कारणस्याऽनुपपत्तेः ॥ ६ ॥

पूर्वाधिकरणे कारणस्याऽनध्यस्तत्वमुक्तं, तेनैव न्यायेन वायुस्तेजसः कारणमिति दृष्टान्तेनाक्षिप्य समाधत्ते—

## तेजो ऽतस्तथा ह्याह ॥ १० ॥

तेजो ऽग्निरतो ऽस्माद्वायुरूपादेव । कुतः ? हि यस्मात् तथा ऽऽह श्रुति'र्वायोरग्नि'रिति ॥ १ ॥

पूर्वाधिकरणे तेजसो वायुयोनित्वमुक्तम् अविरोधात्, इह तु तेजसो ऽब्योनित्वे विरोधः प्रत्यक्ष इति प्रत्युदाहरणेनाक्षिप्याऽतिदेशेन समाधत्ते—

## आपः ॥ ११ ॥

आपो ऽग्नेर्जायन्ते । हेतुः पूर्वसूत्रोक्तः । 'अग्नेराप' इति श्रुतेः ॥ ११ ॥

पूर्वाधिकरणे वायोरिति पञ्चम्या अपादाने मुख्यार्थता स्वीकृ-

ता, तद्वदन्नश्रुतेरपि माषादिषु मुख्यार्थत्वात् तेषामेव स्वीकार इति दृष्टान्तेनाक्षिप्य समाधत्ते—

## पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥

अधिकारो महाभूताऽधिकारः रूपं यत्कृष्णं तदन्नस्येति कृष्णं रूपम्, 'अद्भ्यः पृथिवी'ति शब्दान्तरेभ्यः॥ १२ ॥

पूर्वाधिकरणे ऽधिकारादिभ्यः कार्यशब्दः कारणे नीतः, इह तु भूताऽभिष्ठात्रीणां देवतानां पारतन्त्र्ये हेतुरिति प्रत्युदाहरणेनाक्षिप्य समाधत्ते—

## तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १३ ॥

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । स परमात्मैवाऽऽकाशादिरूपं तत्तद्विकारजातं सृजति । कुतः ? तदभिध्यानात् । तस्य विकारस्याऽभिध्यानं पर्यालोचनं तस्मात् । अभिध्यानमपि भूतानामेव कुतो न स्यादित्यत आह—तल्लिङ्गात् । तस्य परमात्मनो 'यः पृथिवीमन्तरा यमयती'त्यादिना ऽध्यक्षस्य लिङ्गं तस्मान्नाऽभिध्यानं केवलानामित्यर्थः ॥ १३ ॥

पूर्वाधिकरणे पारतन्त्र्यं देवतानां भूतानां तल्लिङ्गादित्युक्तं, न तथा प्रलयक्रमे किं चिन्नियामकमिति प्रत्युदाहरणेनाक्षिप्य समाधत्ते—

## विपर्ययेण तु क्रमो ऽत उपपद्यते च ॥१४॥

तुशब्दः प्रलये उत्पत्तिक्रमनिवारणार्थः । किन्तु अतो ऽस्मादुत्पत्तिक्रमाद्विपर्ययेण पृथिव्यप्स्वित्यादिक्रम उक्त उपपद्यते । यतः कार्यस्य घटादेः कारणे मृदादौ प्रलयस्य दृष्टत्वात् । चकारो 'जगत्प्रतिष्ठा देवर्षे' इत्यादिस्मृतिसमुच्चयार्थः ॥ १४ ॥

पूर्वाधिकरणे दृष्टाऽनुसारेणोत्पत्तेर्विपरीतः प्रलये क्रम इत्युक्तम्, इदानीमुत्पत्तिक्रममेवाऽऽक्षिप्य समाधत्ते—

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाऽविशेषात् ॥ १५ ॥

विज्ञानं बुद्धिर्मन इन्द्रियं संकल्पविकल्पात्मकं विवक्षितं, विज्ञानं च मनश्च विज्ञानमनसी येन क्रमेण जायमाने आत्माकाशयोरन्तरा अन्तराले जायेते ते । कुतः?स्तल्लिङ्गात् तस्या ह्यन्तरालजन्मनो लिङ्गभूतेभ्यः पूर्वमात्मन 'एतस्माज्जायते प्राण' इत्यादिना स्वरूपसंकीर्त्तनं बुद्धे'र्बुद्धिं तु सारथिं विद्धी'त्यनेनेति चेत् नैतत् । कुतः ? अविशेषात् । न हि परमेश्वराज्जनिरिति क्रमो नियन्तुं शक्यः, किं तु भौतिकानि नेति विशेषः । न चाऽसावस्तीत्यर्थः ॥ १५ ॥

पूर्वाधिकरणे विशेषाऽश्रवणेन क्रमभङ्गो निवारितः, इदानीं विशेषाऽश्रवणेनैवोदाहरणत्वेन त्वंपदार्थस्योत्पत्तिरित्याक्षिप्य समाधत्ते—

## चराऽचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६ ॥

जातो देवदत्तो मृतो देवदत्त इत्यादिव्यपदेशो जातकर्मादिसंस्कारश्च नात्मन इति तुशब्द आह । तर्हि किमात्मको ऽयमित्यत आह—भाक्तः । भक्तिर्गुणयोग उपचार इति यावत् । तद्वशात्प्रवर्ततइति भाक्तः । क तर्हि मुख्य? इत्यत आह—चराऽचरव्यपाश्रयः स्थावरजङ्गमशरीराश्रयस्तस्य जन्मादेर्व्यपदेशः स्यात् भवेत् । कुतः?स्तद्भावभावित्वात् । तस्य शरीरस्य भावो यस्यास्ति जन्मादिव्यपदेशस्य संस्कारस्यापि सोयं तद्भावभावी तस्य भावस्तत्त्वं तस्मात् । अतः संस्कारोऽपि तदाश्रयः ॥ १६ ॥

पूर्वाधिकरणे कृतनाशादिप्रसङ्गेन जन्मादिशब्दा देहविषया उक्ता, नैवं कल्पादौ परमेश्वरादुत्पत्स्यमानजीवस्य कश्चन विरोध इति प्रत्युदाहरणेनाक्षिप्य समाधत्ते—

## नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥

नैवायमात्मा परस्मादात्मन आकाशादिवज्जायते । कुतः ? तद्वदस्योत्पत्तेरश्रुतेः । श्रीह्याद्युत्पत्तिवत् । अस्त्वनुभयमित्यत आह—

नित्यत्वात् । चशब्दादजन्यत्वादिभ्यश्च । नित्यत्वादिकमेव कुत ? इत्यत आह—ताभ्यः ताः श्रुतयो 'न जीवो म्रियते स वा एष महानज आत्मे'त्याद्याः ॥ १७ ॥

पूर्वाधिकरणे जीवपरमात्मनोरैक्याद्यनुत्पत्तिर्जीवस्योक्ता, इदानीमागन्तुकज्ञानत्वेन जीवस्यैक्यमेवाऽनुपपन्नमित्याक्षिप्याऽतिदेशेन समाधत्ते—

**ज्ञो ऽत एव ॥ १८ ॥**

ज्ञो नित्यचैतन्यरूपो ऽयमात्मा । अत एवोत्पत्त्यसम्भवादेव परमात्मवत् ॥ १८ ॥

पूर्वाधिकरणे स्वयंप्रकाशत्वं जीवस्योक्तं तन्मनोवदणुपरिमाणस्य नोपपन्नमिति तदर्थमणुत्वं समर्थयते—

**उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥**

उत्क्रान्ति'रस्माच्छरीरादुत्क्रामती'ति श्रुतेः तासां श्रवणादणुपरिमाणो जीवः ॥ १९ ॥

ग्रामस्वाम्यनिवृत्तिवदस्तूत्क्रान्तिस्तन्निदर्शनेन गत्यागती अपि तथेत्यत आह—

**स्वात्मनश्चोत्तरयोः ॥ २० ॥**

उत्तरयोर्गत्यागत्योः स्वात्मनैव परिस्पन्दाधारेणैव निष्पत्तेः । चकारेणोत्क्रान्तेरपि मुख्यायास्तेनैव निष्पत्तेर्न दृष्टान्तः ॥ २० ॥

**नाऽणुरतच्छ्रुतेरिति चेन्नेतराऽधिकारात्॥२१॥**

जीवो ऽणुर्न । कुतः ? अतच्छ्रुतेः । तस्याऽणुत्वस्याऽप्रतिपादिका श्रुतिरतच्छ्रुतिः तस्या इति चेन्न । कुतः ? इतरस्य परात्मनो ऽधिकारात् ॥ २१ ॥

प्रकरणान्महानितिवदणुत्वस्य श्रवणान्नाऽणुर्जीव इत्यत आह—

**स्वशब्दोन्मानाभ्यां च ॥ २२ ॥**

स्वस्याऽणुत्वस्य वाचकः 'एषो ऽणु'रिति स्वशब्दश्च उन्मानं च 'बालाग्रे'त्यादिना ऽभिहितम् । चकारो हृदयाऽवस्थानसमुच्चयार्थः॥२२॥

अणुश्चेज्जीवः पदोरगस्य मस्तके चन्दनस्य स्पर्शोपलम्भनस्य युगपद्विरोधं इत्यत आह—

## अविरोधश्चन्दनवत् ॥ २३ ॥

अयं न विरोधो ऽविरोधः । किंवदित्यत आह–चन्दनवत् । यथा हरिचन्दनबिन्दुरेकत्र त्वचा सम्बद्धः सर्वशरीरसुखाय एवमणुरात्मापि ॥ २३ ॥

## अवस्थितिवैशेष्यादिति चेन्नाऽभ्युगमाद्धृदि हि ॥ २४ ॥

चन्दनबिन्दोरवस्थानं मस्तकादाववस्थितिः तस्या विशेषः प्रत्यक्षं तद्विषयं विशेषस्य भावो वैशेष्यं तस्माद्विषमं न दृष्टान्ते इति चेन्न । कुतः ? जीवस्य देहैकदेशाऽवस्थानस्याऽभ्युपगमात् । तदेव कुतः ? 'हृदि हीं'ति श्रुतेः ॥ २४ ॥

न निरवयवे आत्मनि साऽवयवश्चन्दनबिन्दुदृष्टान्तः, न च चन्दनस्यापि सर्वशरीरव्यापित्वमेकदेशस्थस्येत्यत आह—

## गुणाद्वा लोकवत् ॥ २५ ॥

नाऽनुभवाऽपलापो युक्त इति वाशब्दः । अणोरपि जीवस्य स्वचैतन्यात् गुणात् सर्वशरीरव्यापिता । कुत? एतदित्यत आह–लोकवत् । यथा लोके घटाद्येकदेशस्थानां मण्यादीनामणूनां स्वप्रभया घटादिव्यापित्वं तद्वत् ॥ २५ ॥

ननु गुणस्याऽऽश्रयाद्व्यतिरेको ऽदृष्टचर इत्यत आह—

## व्यतिरेको गन्धवत् ॥ २६ ॥

गुणिनं जीवं परित्यज्य गुणस्य चैतन्यस्य वृत्तिर्व्यतिरेको नाऽनुपपन्नः । किं तदित्यत आह–गन्धवत् । यथा केतक्यादेर्द्रव्यस्यातिदूरस्यापि तद्गुणस्याऽन्यत्र वृत्तिस्तद्वत् ॥ २६ ॥

अणोर्जीवस्यापि चैतन्यं प्रमाणशून्यमित्यत आह—

## तथा च दर्शयति ॥ २७ ॥

हृदयाऽऽयतनत्वमणुपरिमाणत्वं चाऽऽत्मनो ऽभिधाय तस्यैवा'ऽऽलोमभ्य आ नखाग्रेभ्य' इति चैतन्येन गुणेन समस्तशरीरव्याप्तिं दर्शयति। यथा ऽस्माभिरङ्गीकृतं तथा। चकारो जीवस्य व्याप्तत्वे भोगसङ्करसमुच्चयार्थः ॥ २७ ॥

'आ लोमभ्य' इत्याद्या श्रुतिर्जीवस्य चैतन्यगुणेन व्याप्तिं शरीरस्य प्रकारान्तरेण वा ब्रूते इति न शक्यं ज्ञातुमित्यत आह—

## पृथगुपदेशात् ॥ २८ ॥

अणोरात्मनः कर्तुश्चैतन्यस्य शरीरव्याप्तौ 'प्रज्ञया शरीरं समारुह्ये'ति पृथगुपदेशात्। सिद्धान्तस्तु गुणः सारः प्रधानं यस्य स तथा ॥ २८ ॥

## तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥

तुशब्दो जीवस्य स्वाभाविकाऽणुत्वनिरासार्थः। कथन्तर्ह्यणुत्व?मित्यत आह—तद्गुणसारत्वात्। तस्या बुद्धेर्गुणा अणुत्वादयः सारो यस्य जीवस्य स तथा तस्य भावस्तत्त्वं तस्मात्तेषामणुत्वोत्क्रान्त्यादीनां श्रुत्या तद्व्यपदेशः उपाधिगुणेनोपहितस्य। किंव?दित्यत आह-प्राज्ञवत्। यथा प्राज्ञः परमात्मा उपाधेर्हृदयाऽऽकाशदहरादेर्धर्मेणोपहितो दहरादिना व्यपदिश्यते 'दहरो ऽस्मिन्नन्तराकाश'इति श्रुतेः तद्वत् ॥ २९ ॥

यद्यात्मा बुद्धिगुणसारस्तस्य कार्यत्वेन विनाशस्याऽवश्यम्भावात् कृतं ब्रह्मज्ञानेन, कृतार्थाश्चाऽऽसत्यवादिनः, अनुपहितस्यात्मनो ऽप्रतीतेरित्यत आह—

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥

यावदात्मनो जीवस्य भावः 'अहं ब्रह्माऽस्मी'ति बोधाऽनुत्पत्तिर्न दोषः ॥ ३० ॥

## पुंस्त्वादिवत्तस्य सतो ऽभिव्यक्तियोगात् ॥ ३१ ॥

अन्तःकरणसम्बन्धस्य सुषुप्तिप्रलययोः सत एवाऽभिव्यक्तिः प्रकटभावस्तस्य योगाद्युक्तत्वात्। किंव?दित्यत आह—पुंस्त्वादिवदिति। यथा बाल्ये सत एव पुंस्त्वस्य यौवने ऽभिव्यक्तिस्तद्वत् ॥ ३१

ननु बुद्धिरूपाऽन्तःकरणे किं प्रमाणं ? यत्प्रयुक्तः संसारः स्यादित्यत आह—

नित्योपलब्ध्यनुपलब्धिप्रसङ्गो ऽन्यतरनियमो वा ऽन्यथा ॥ ३२ ॥

यथा ऽन्तःकरणाऽभावे स्फीताऽऽलोकमध्यवर्तिनः चक्षुरादेरुपलम्भस्य सन्निकृष्टस्य घटादेर्नित्यं सदोपलम्भस्य प्रसङ्गः स्यात्। अथैतावता नोपलम्भप्रसङ्गः स्यात्। नित्यमुपलब्धिश्चाऽनुपलब्धिश्च नित्योपलब्ध्यनुपलब्धी तयोः प्रसङ्गो न पुनः कदा चिदुपलम्भः। अथ वा ऽयमप्यस्तु तर्ह्यन्यतरनियमः। अन्यतरस्यात्मनो ऽविक्रियस्य द्रकृक्तोरिन्द्रियस्य वा पूर्वोत्तरक्षणे समानरूपस्य नियमनं नियमः प्रतिबन्धः कल्पेत, नैतत् त्रयमपि युक्तम्। वाशब्दः प्रत्यक्षस्याऽनुपलम्भप्रौढ्यर्थः ॥ ३२ ॥

पूर्वाधिकरणे बुद्ध्युपाधिनिमित्तं विरुद्धधर्मत्वमित्युक्तम्। तर्ह्युपाधेरेव कर्तृत्वमित्याक्षिप्य समाधत्ते—

कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥

अयं जीवः कर्ता। कुतः ? 'यजती'त्यादिशास्त्रस्यार्थः प्रयोजनं यस्यास्ति स शास्त्रार्थवान् तस्य भावस्तत्त्वं तस्मात् ॥ ३३ ॥

न च प्रयोजनाऽभावेन तर्कमात्रं साधकमित्यत आह—

विहारोपदेशात् ॥ ३४ ॥

विहरणं विहारः क्रिया तस्याः 'स ईयत'इत्यादिनोपदेशात् ॥३४॥

अथापि नोपनिषत्सु कर्तृत्वेन तर्क इत्यत आह—

उपादानात् ॥ ३५ ॥

'विज्ञानेन विज्ञानमादाये'त्यादिना प्राणानामुपादानात् स्वीकारात्। तर्कात्कर्तृत्वमस्य ॥ ३५ ॥

यतस्याः क्रियाया उपचारादपि कर्तृत्वं स्यादित्यत आह—

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३६ ॥

क्रियायां लौकिक्याश्च 'विज्ञानं यज्ञं तनुते' 'कर्माणि तनुतेपि च'त्यनेन कर्तृत्वस्य व्यपदेशाच्चेद्यदि विज्ञानशब्देन कर्ता नाऽभिमतः किन्तु करणं बुद्धिः तदा निर्देशस्य विज्ञानमित्यस्य विज्ञानेनेति विपर्ययः, स्यात् ॥ ३६ ॥

कर्तृत्वं नाम स्वातन्त्र्यम्, तथा च कथमयं बुद्धिमान् स्वस्याऽनिष्टं कुर्या ? दित्यत आह—

## उपलब्धिवदनियमः ॥ ३७ ॥

यथोपलब्धि स्वतन्त्रो ऽप्यनिष्टं करोति तद्वदत एव नाऽयमपि नियमः स्वतन्त्रो नाऽनिष्ट करोतीति ॥ ३७ ॥

'विज्ञानं यज्ञं तनुत'इति विज्ञानस्यैव कर्तृत्वं वेदः श्रावयति, सांख्याश्च तथैव विज्ञानशब्दवाच्यायाः केवलाया बुद्धेः कर्तृत्वमङ्गीकुर्वन्ति, तस्याः सर्वार्थकारित्वात् शास्त्रार्थवत्त्वादिकं सर्वं पुरुषचरितं कर्तृत्वमापादयतीत्यत आह—

## शक्तिविपर्ययात् ॥ ३८ ॥

बुद्धेः कर्तृत्वे वर्णितन्यायेन कारणान्तराऽपेक्षया ऽवश्यम्भावेन करणशक्तेर्बुद्धेः कर्तृत्वशक्तिरिति शक्तिविपर्ययो दोषः । तस्मान्न बुद्धिः कर्त्री ॥ ३८ ॥

नायं शक्तिविपर्ययो दोषः पुरुषस्याऽसङ्गोदासीनत्वाद् बुद्धेरेव बन्धमोक्षावित्यत आह—

## समाध्यभावाच्च ॥ ३९ ॥

समाधे'रात्मावारे द्रष्टव्य' इत्यादिनोक्तस्य पुरुषे ऽविद्याकृतस्यापि कर्तृत्वस्याऽभावो वैयर्थ्यं तस्मात् । चाशब्दादनुभवविरोधादिकं समुच्चिनोति ॥ ३९ ॥

पूर्वाधिकरणे शास्त्रार्थवत्त्वेन कर्तृत्वमुक्तम्, इदानीं न तन्मिथ्या, किन्तु-तत्स्वरूपमित्याक्षिप्य समाधत्ते—

## यथा च तक्षोभयथा ॥ ४० ॥

तक्षा सूत्रधारो वास्यादिव्यापारे हस्तादिकरणाक्षेपकर्ता यद्यपि वास्यादिपरित्यागे हस्तादिमानपि तद्व्यापारस्याऽकर्ता यथा एवमात्मापि बहिःकरणाक्षेपकर्ता तदभावे स्वरूपचैतन्येनाऽकर्तैत्युभयथा भवति । चस्त्वर्थे एतावत्यंशे निदर्शनेत्यन्वधारणार्थः ॥ ४० ॥

पूर्वाधिकरणे कर्तृत्वं मिथ्याभूतमित्युक्तं, तस्मिंस्तस्य स्वातन्त्र्यान्न तन्मिथ्येत्याक्षिप्य समाधत्ते—

## परात्तु तच्छ्रुतेः ॥ ४१ ॥

तुशब्द ईश्वराऽनपेक्षां वारयति । परात् परस्मात् कर्तृत्वमुक्तं जीवस्य । कुतः ? तच्छ्रुतेः । तस्य सापेक्षत्वस्य 'एष ह्येव साधु कर्म कारयती'ति तच्छ्रुतेः ॥ ४१ ॥

एवं चेदीश्वरः कारयति विषमो निर्घृणश्च स्यादित्यत आह—

## कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धाऽवैयर्थ्यादिभ्यः ॥ ४२ ॥

तुशब्दो वैषम्यनैर्घृण्यवारणार्थः । तन्निवारणं कुत? इत्यत आह—कृतप्रयत्नापेक्षः कृतो जन्मान्तरे प्रयत्नस्तस्याऽपेक्षा यस्य सोयं कृतप्रयत्नापेक्षः । तदेव कुत ? इत्यत आह–विहितप्रतिषिद्धाऽवैयर्थ्यादिभ्यः । विहितं 'यावज्जीवमग्निहोत्रं जुहोती'त्यादि, प्रतिषिद्धश्च 'न सुरां पिबे'दित्यादि, तयोरवैयर्थ्यम् । आदिशब्देन पुरुषकारादीनामपि । तेभ्यः ॥ ४२ ॥

पूर्वाधिकरणे ईश्वराऽकर्तृत्वमुक्तम्, इदानीमीश्वरो जीवेशाऽभेदादिना दुर्भण इति स एव नास्तीत्याक्षिप्याऽतद्देशस्य जीवस्य सत्त्वेनांशिनमीश्वरं साधयति—

## अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४३ ॥

जीवो ब्रह्मणोंश इवांशः । कुतः ? नाना 'द्रष्टव्य' इत्यादिनोक्तो

द्रष्टव्यत्वादिभेदः तस्य व्यपदेशस्तस्मात्। ननु चायं नानाव्यपदेशः सुतरां स्वामिभृत्यसारूप्ये युज्यत? इत्यत आह—अन्यथा चापीति। अन्यथापि व्यपदेशो भवति प्रकृतादन्यथात्वं नानात्वं तस्य 'तत्त्वमसी'त्यादिना एके आथर्वणिका 'ब्रह्मदाशा' इत्युपक्रम्य 'ब्रह्मेमे कितवा'इत्यधीयते। चकारः पक्षान्तरे ऽनुपपत्तिसमुच्चयार्थः ॥ ४३ ॥

अन्यत्र मन्त्राद्यभावादिदमध्ययनमतात्पर्यवदित्यत आह—

## मन्त्रवर्णात् ॥ ४४ ॥

'एतावानस्य महिमे'त्यस्मात् ॥ ४४ ॥

अस्य मन्त्रार्थः क्व चित् स्मृतौ न प्रतीयते ऽतोयमुपेक्षणीय इत्यत आह—

## अपि च स्मर्यते ॥ ४५ ॥

गीतासु च 'ममैवांश' इत्यादिना स्मर्यते। अपिशब्दो मन्त्रार्थाऽस्मरणमप्रयोजकमपीत्याह ॥ ४५ ॥

यदि जीवपरमात्मनोरंशांशिभावः तर्हि जीवो दुःखीत्यादिना परमात्मनोपि दुःखित्वं स्यादित्यत आह—

## प्रकाशादिवन्नैवं परः ॥ ४६ ॥

यथा जीवो दुःखित्वादिगुणः नैवम्परः परमात्मा। किंवत्तद्गुणाऽभाव ? इत्यत आह—प्रकाशादिवत्। यथा सौरादिप्रकाशो ऽङ्गुल्यादिप्रदेशो एव ऋजुवक्रादिमान्। आदिशब्देन घटादिप्रदेशे आकाशो धूमादिमान् न पुनः प्रकाशदेशो आकाशदेशो वा तद्वत् ॥४६॥

न युक्तिमात्रेण श्रद्धातुं शक्यमित्यत आह—

## स्मरन्ति च ॥ ४७ ॥

'तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृत' इत्युपक्रम्य 'क आत्मा त्वंपरो योऽसा'वित्यादिना च शब्दात्समामनन्ति तद्वत् 'द्वा सुपर्णे'त्यादिना ॥ ४७ ॥

मा भूत् दुःखित्वादि परमात्मन,स्तथापि जीवस्यापि परमात्मत्वाच्च विधिप्रतिषेध इत्यत आह—

## अनुज्ञापरिहारौ देहसम्बन्धात् ज्योतिरादिवत् ॥ ४८ ॥

अनुज्ञा 'ऋतौ भार्यामुपेया'दित्यादिका। 'सुरां न पिबे'दिति परिहारः। देहस्य सम्बन्धो देहसम्बन्धः अहं मनुष्य इत्याद्यभिमानस्तस्मात्। स्वभावेन यो यस्य न धर्मः सोऽन्यसम्बन्धाद्भवतीत्यत आह—ज्योतिरादिवत्। यथा ज्योतिरादि स्वभावतः प्रशस्तं सूर्यादिगतमप्रशस्तम्। आदिशब्देन भूमिर्वैदूर्यादिरूपा प्रशस्ता, प्रेतशरीरादिरूपा ऽप्रशस्ता। एवं परमात्मा ऽप्युपाधिविशेषसम्बन्धाद्विधिप्रतिषेधभागपि न भवतीत्यर्थः ॥ ४८ ॥

तथापि स्वामिन एकत्वात् फलस्य दुःखादेः सर्वशरीरेष्वेकत्वं स्यादित्यत आह—

## असन्ततेश्चाऽव्यतिकरः ॥ ४९ ॥

न सन्ततिरसन्ततिः, अन्तःकरणोपाधिकस्य कर्तुर्भोक्तुरनेकत्वात् न सुखदुःखादेः सर्वशरीरेषु व्यतिकरः। चकारो घटाऽऽकाशादिनिदर्शनं समुच्चिनोति ॥ ४९ ॥

एवं च द्वैतापत्तिरित्यत आह—

## आभास एव च ॥ ५० ॥

जलसूर्यकादिवदाभास एवाऽयं जीवो न वस्त्वन्तरं परमात्मनः। चकारस्तस्याऽसत्त्वमपि वारयति ॥ ५० ॥

एवं कल्पनातो बहव आत्मानः सर्वगताः सन्ति, तेषु च सुखदुःखादिनियमो ऽदृष्टवशादित्यत आह—

## अदृष्टाऽनियमात् ॥ ५१ ॥

बहूनामात्मनां मनःसंयोगे साधारणे सति अस्यैवाऽदृष्टमित्यस्याऽदृष्टस्य न नियमस्तस्मात् ॥ ५१ ॥

बह्वात्मस्वीकारो न साधु,स्तत्र ज्ञानेच्छादीनां नियामकत्वमित्यत आह—

## अभिसन्ध्यादिष्वपि चैवम् ॥ ५२ ॥

अभिसंधिरभिप्रायो ज्ञानम् । आदिशब्देन इच्छादयस्तेष्वप्येवमनियमो यथाऽदृष्टस्य । चकारोऽस्याः कल्पनायाः श्रुतिविरोधं समुच्चिनोति ॥ ५२ ॥

## प्रदेशादिति चेन्नाऽन्तर्भावात् ॥ ५३ ॥

सर्वगतानामपि सर्वेषामात्मनां तत्तद्देहस्य प्रदेशात् परिच्छेदात् ज्ञानादीनामुत्पाद इति चेन्न । कुतः ? सर्वेषामप्येकस्मिन्देहेऽन्तर्भावात् ॥ ५३ ॥

इति ब्रह्मसूत्रदीपिकायां द्वितीयाध्यायस्य तृतीयः पादः ॥३॥

—०*०—

तृतीये पादे भूतश्रुतीनां भोक्तृश्रुतीनां च परस्परविरोधाऽपाकरणेन तत्कृतविरोधं समन्वये वारयति चतुर्थेन पादेन, तत्रापि भोगोपकरणानां भौतिकानां प्राधान्यात् प्रथमं प्राणोत्पत्तिमाह—

## तथा प्राणाः ॥ १ ॥

पूर्वपादाधिकरणे यथाऽऽकाश उत्पन्नः परस्मादित्युक्तं, तथा प्राणा अपि उत्पद्यन्ते । अथ वा यथा लोकादयः परस्मादुत्पन्नाः श्रूयन्ते तथा ॥ १ ॥

'प्राणा ऋषयो वाव तदग्रे सदासी'दित्यनया श्रुत्या प्राणानामनुत्पत्तेस्तदुत्पत्तिर्गौणी स्यादित्यत आह—

## गौण्यसम्भवात् ॥ २ ॥

गौण्या असम्भवो गौण्यसम्भवस्तस्मात् । प्रतिज्ञाहान्यादयः प्रागुक्ता एव हेतवः ॥ २ ॥

तथापि जनैरुपचारनिवारणं किमुक्तमित्यत आह—

## तत्प्राक्श्रुतेश्च ॥ ३ ॥

तेभ्य आकाशादिभ्यः प्राक् पूर्वं जायतइतीदं यथा तेषु नोपचरितं तथा प्राणेष्वपीत्यर्थः ॥ ३ ॥

## तत्पूर्वकत्वाद्वाचः ॥ ४ ॥

ब्रह्मप्रकृतिकं यत् तेजः तत्पूर्वकत्वात् कारणात् वाचो वागाख्येन्द्रियप्राणस्याऽतो ऽर्थात् तत्रापि श्रवणमित्यर्थः ॥ ४ ॥

पूर्वाधिकरणे श्रुतिप्रामाण्यात् प्रणोत्पत्तिर्वर्णिता, तद्वत् 'सप्त वै शीर्षण्याः प्राणा' इत्यस्याः प्रामाण्यात्सप्तैव प्राणा इत्याक्षिपति । अथ वा न्यायाऽनुसारात् प्राणानामुत्पत्तिरुक्ता, अत्रापि 'प्राणमुत्क्रामन्तं सर्वा'इति लाघवन्यायात् सप्त प्राणा इत्याक्षिपति—

## सप्तगतेर्विशेषितत्वाच्च ॥ ५ ॥

सप्तसंख्यानामवगतिः 'सप्त प्राणाः प्रभवन्ती'त्यस्मात् । सामान्यवचनमिदं विशेषादधिका भविष्यन्तीत्यत आह—विशेषितत्वादपि । 'तेषां सप्त वै शीर्षण्या' इत्यनेन ॥ ५ ॥

## हस्तादयस्तु स्थिते ऽतो नैवम् ॥ ६ ॥

तुशब्दः सप्तभ्यो व्यतिरेकमाह । स एव कुत ? इत्यत आह—हस्तादयः हस्त आदिर्येषा ते त्वगादयो हस्तादयः 'हस्तौ वै ग्रह' इत्यादिनोक्ताः । स्थितः सप्तभ्यो व्यतिरेकः । अतो ऽस्माद्व्यतिरेकात् नैवं सप्तैवेति किं त्वेकादश । कुतः ? 'दशेमे पुरुषे प्राणा' इत्यादिश्रुतेः । अथ वा सप्तैव प्राणा अवगम्यन्ते 'तमुत्क्रामन्त'मित्यादिवचनात् ॥ ६ ॥

ननु सर्वशब्दश्रवणे कथं सप्तैवे?त्यत आह—

## विशेषितत्वाच्च ॥ ७ ॥

मनोविज्ञानयोरेककोट्या चक्षुरादीनां विशेषितत्वात्सर्वशब्दः सप्तविषयः । चकारो 'नियतान्नियतिर्य'इति न्यायसूचनार्थः । द्वितीयसूत्रे न कोपि विशेषः पूर्वस्माद्व्याख्यानात् ॥ ७ ॥

पूर्वाधिकरणे एकादशेन्द्रियाणि उत्क्रामन्तीत्युक्तं, तदयुक्तं व्यापित्वादिन्द्रियाणामित्याक्षिप्य समाधत्ते—

अणवश्च ॥ ८ ॥

प्राणा इत्यनुवर्तते । अणवो ऽप्यसर्वगतपरिमाणाः प्राणा इत्यर्थः ॥ ८ ॥

पूर्वाधिकरणे उत्क्रान्त्यादिवशात् प्राणानामणुत्वमङ्गीकृतं, तद्वदिदानीमुत्पत्तेः प्राक् प्राणचेष्टाश्रवणात् मुख्यप्राणस्य नोत्पत्तिरिति दृष्टान्तेनाक्षिप्य पादाद्याधिकरणप्रायातिदेशेनोत्पत्तिमाह—

श्रेष्ठश्च ॥ ९ ॥

श्रेष्ठो मुख्यः प्राणः सोपि जायते । कुतः? 'एतस्माज्जायते प्राण' इति श्रुतेः ॥ ९ ॥

पूर्वाधिकरणे मुख्ये प्राणस्य पृथगुत्पत्तिर्वायोरिन्द्रियेभ्यश्चोक्ता, सा ऽयुक्ता, मुख्यप्राणस्य वायुस्वरूपत्वादिन्द्रियत्वाद्वेत्याक्षिप्य समाधत्ते—

न वायुक्रिये पृथगुपदेशात् ॥ १० ॥

मुख्यप्राणो न वायुः प्रसिद्धः, न च करणानां वृत्तिः, क्रिया च वायुश्च वायुक्रिये कुतस्ताभ्यां पृथगुपदेशः?'स वायुना ज्योतिषे'ति वायोरिन्द्रियेभ्यः । 'अथ ह एवायं मुख्यः प्राण' इत्यादिना तस्मात् । एवं चेज्जीवः ॥ १० ॥

चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ ११ ॥

तुशब्दः प्राणस्य स्वातन्त्र्यवारणार्थः । चक्षुरादिवत् । चक्षुरादीनां यथा न स्वातन्त्र्यं तद्वत्प्राणस्य । कुतः? तत्सहशिष्ट्यादिभ्यः । तैरिन्द्रियैः सहशिष्टिः शासनमुपदेशः प्राणसंवादादौ । आदिशब्देन संहतत्वाऽचेतनत्वादयस्तेभ्यः ॥ ११ ॥

स्यादेतत्–यथा ऽन्येषां प्राणानां रूपादयो विषयास्तथा ऽस्यापि कश्चन स्यादित्यत आह—

अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ १२ ॥

प्राणस्य विषयान्तराऽसत्त्वं न दोषः । कुतः? अकरणत्वात् ।

करणस्यैवाऽयं दोषः, न त्वकरणस्य । चकारो देहधारणं प्रयोजनं समुच्चिनोति । कथमेतदित्यत आह—तथा । हि दर्शयति । हि यस्माद्यथा ऽस्माभिरुक्तस्तथा 'ऽहमेवैतत् पञ्चधा ऽऽत्मानं प्रविभाज्ये'त्यादिश्रुतिगणो देहधारणं दर्शयति । चकारो यदस्ति तस्य विषयकल्पना भवतीति नियमाऽभावदर्शनार्थः ॥ १२ ॥

देहधारणकार्यं जीवस्य प्राणस्य चेति संदेहादन्यस्य प्राणकार्यस्याऽदर्शनात् निरर्थकः प्राण इत्यत आह—

## पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १३ ॥

पञ्च वृत्तयो यस्य स तथा । किंवत् पञ्चवृत्तिरित्यत आह—मनोवत् । यथा मनः प्रमाणविपर्ययविकल्पनिद्रास्मृतिभिः पञ्चवृत्ति तद्वत् । तर्हि योगानामिव तर्कमूलमिदमित्यत आह—व्यपदिश्यते श्रुत्या 'प्राणो ऽपानो व्यान उदानः समान' इति ॥ १३ ॥

पूर्वाधिकरणे वायुक्रियाभ्यां तत्त्वान्तरं प्राण इत्युक्तम्, अस्तु तत्त्वान्तरं, तथापि तस्य जीवमनूत्क्रामस्याऽसम्भवो व्यापित्वादित्याक्षिप्य समाधत्ते—

## अणुश्च ॥ १४ ॥

मुख्यप्राणो ऽप्यसर्वगतपरिणामो ऽपि पूर्वप्राणवत् ॥ १४ ॥

पूर्वाधिकरणेष्विन्द्रियाणामुत्पत्त्यादिकं वर्णितं, तेषां चाऽग्न्याद्यधिष्ठितत्वं श्रुतमनुपपन्नं, समनन्तराऽधिकरणे प्राणसमत्ववदिति दृष्टान्तेनाऽऽक्षिप्य समाधत्ते—

## ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १५ ॥

तुशब्दः प्राणस्याऽधिष्ठानत्वं वारयति । ज्योतिरादिर्यस्याऽऽदित्यादेस्तदिदं ज्योतिरादि । ज्योतिरादेरधिष्ठानं ज्योतिराद्यधिष्ठानं वागादि । तस्य ज्योतिराद्यधिष्ठानस्य वागादे'रग्निर्वाग् भूत्वे'त्यादिना ऽऽमननात् ॥ १५ ॥

एवं चेद्देवानामेव सुखादिभागः स्यादित्यत आह—

## प्राणवता शब्दात् ॥ १६ ॥

प्राणवता जीवेन वागादीनां सम्बन्धो भोक्तृतत्साधनत्वलक्षणः। कुतः ? शब्दात् वैदिकात्। 'अथ यत्रैतदाकाशमनु निषण्णं चक्षु'रित्यादेः ॥ १६ ॥

यथा शरीरेण सम्बन्धः तथा ऽधिष्ठातृत्वलक्षणस्ताभिरपीत्यत आह—

## तस्य च नित्यत्वात् ॥ १७ ॥

तस्य शरीरस्य नित्यत्वात्। अस्मिन् शरीरएव भोक्तृत्वात् न देवतात्मनां ऽग्नीन्द्रादिशरीरभोगस्य सत्त्वात्तासाम्। चकारो ऽनेकदुःखसंभिन्नस्याऽस्य भोगस्य देवताभिन्नभोग्यत्वं समुच्चिनोति॥१७॥

पूर्वाधिकरणे ज्योतिराद्यधिष्ठितानीन्द्रियाणीत्युक्त,मिदानीं प्राणव्यापारव्यतिरिक्तानीन्द्रियाण्येव न सन्तीत्याक्षिप्याह। अथ वा प्राणेन्द्रियस्याऽन्तत्वाधिष्ठानाऽभाववदन्यत्राप्यभावः स्यादित्याक्षिप्य प्राणस्याऽनिन्द्रियत्वमाह—

## तइन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्॥१८॥

ते प्रकृताः प्राणाः श्रेष्ठादन्यत्र मुख्यप्राणं विहायेन्द्रियाणि न तु मुख्यस्य प्राणस्य रूपाणि। कुतः ? तस्मात् प्राणात्तु भेदेनेन्द्रियाणां व्यपदेशात्। 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च'त्यनेन॥१८॥

अस्तु तेषां प्राणाद् भेदः, न तु प्राणस्तेभ्यो भिन्न इत्यत आह—

## भेदश्रुतेः ॥ १९ ॥

'अथ हेममासन्यं प्राणमूचु'रित्यादिना प्राणस्य तेभ्यो भेदश्रुतेः ॥ १९ ॥

भेदश्रुतिरियं वाक्चक्षुषोरिव भविष्यतीत्यत आह—

## वैलक्षण्याच्च ॥ २० ॥

सुषुप्तौ सर्वेन्द्रियाणां प्रविलयो न, 'प्राणाऽग्नय एवैतस्मिन् जाग्रती'ति श्रुतेः। प्रत्यक्षतश्चेन्द्रियेभ्यः प्राणस्य वैलक्षण्यात्। चकारो वाक्चक्षुषोरपि कर्मेन्द्रियज्ञानेन्द्रियकृतभेदसमुच्चयार्थः ॥ २० ॥

पूर्वाधिकरणे प्राण इन्द्रियाणीति पृथङ्‌ निर्देशात् तस्य च तेषां

च तत्त्वान्तरत्वमुक्तं, तच्च 'जीवेने'ति श्रवणाद् नामरूपयोरुत्पादनं जीवेन क्रियते इति दृष्टान्तेनाक्षिप्य समाधत्ते—

## संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २१ ॥

तुशब्दो जीवकर्तृत्वं वारयति । संज्ञा आदित्यादिरूपा, मूर्तिः सिताऽसितरूपा, संज्ञामूर्त्योः क्लृप्तिः कल्पनं नामरूपव्याक्रिये त्रिवृत्कुर्वतः परमेश्वरस्य । कुतः ? व्याकरवाणीत्युत्तमपुरुषोपदेशात् ॥ २१ ॥

अस्तु बहिस्त्रिवृत्करणं यथा कथं चित्, अन्तस्त्रिवृत्करणं दुर्लभमित्यत आह—

## मांसादिभौमं यथाशब्दमितरयोश्च ॥ २२ ॥

पुरीषादीति वक्तव्ये तस्य शरीराद्बहिष्ठस्य प्रदर्शनं यतस्तद् आह—मांसादीति । मांसमादिर्यस्य मनःपुरीषस्य तदिदं मांसादिभौमं भूमेर्विकारः यथाशब्दं शब्दमनतिक्रम्याऽस्य कार्यस्याऽभिधानात् । 'तस्य यः स्थविष्ठो धातु'रित्यादिना । इतरयोश्चाऽप्तेजसोरपि मूत्रलोहितप्राणाऽस्थिमज्जावाचः कार्याणि अत आन्तराणि ॥ २२ ॥

त्रिवृत्करणवच्चेत्सर्वस्त्रिवृत्कृतः कथं भूमिरियमित्यादिव्यपदेशः इत्यत आह—

## वैशेष्यात्तु तद्वादस्तद्वादः ॥ २३ ॥

तुशब्दो भूम्यादिव्यपदेशाऽभावनिवारणार्थः । तद्वादस्तस्य भूम्यादेर्वादो व्यपदेशो नाऽनुपपन्नः । कुतः ? वैशेष्यात् विशेषस्य भावो वैशेष्यं भूम्याद्यधिकं तस्मात् । तद्वाद इत्यभ्यासो ऽध्यायपरिसमाप्तिं द्योतयति । वियत्पादे प्राणपादे च प्रथमं वियदाद्युत्पत्तिवादिन्यः श्रुतयो न सन्तीति विरोधाऽभावात् पूर्वपक्षाऽभाव इति पूर्वपक्षाक्षेपः । अन्यत्र तच्छ्रुतीनां सत्त्वात् श्रुत्योर्विरोधात् प्रत्यधिकरणमुभयोरप्रामाण्यमिति पूर्वपक्षः । सिद्धान्तैकदेशिना तदप्रा-

माण्यनिराकरणं यत इति प्रस्तः पूर्वपक्षः। सिद्धान्तैकदेशिना निराकरणेन प्रकारान्तरेणाऽप्रामाण्यनिराकरणमिति सिद्धान्ते ॥ २३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याऽऽनन्दात्मपूज्यपादशिष्यस्य श्रीशङ्करानन्दभगवतः कृतौ ब्रह्मसूत्रदीपिकायां द्वितीयाऽध्यायस्य चतुर्थः पादः। संपूर्णश्च द्वितीयो ऽध्यायः

———०✻०———

पूर्वस्मिन्नध्याये ऽविरोधो ब्रह्मणि समन्वितानां वेदान्तानामुक्तः, इदानीं तत्प्राप्तिसाधनं ब्रह्मज्ञानं सोपायमिह चिन्त्यते। तत्रापि प्रथमपादे पञ्चाग्निविद्यामाश्रित्य संसरणं चिन्त्यते वैराग्यार्थम्।

**तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥**

पूर्वशरीराच्छरीरान्तरं तस्य प्रतिपत्तौ प्राप्तौ भूतसूक्ष्मैः परिष्वक्तो रंहति। कुतः? प्रश्ननिरूपणाभ्याम्। 'यथा वेत्थ'पञ्चम्यामाहुतावाप' इत्याभ्याम् ॥ १ ॥

उदाहृते प्रश्ननिरूपणे ऽब्वेष्टितत्वं गमयतः, न तु तदन्यैर्भूतसूक्ष्मैः परिवेष्टितत्वं गमयत इत्यत आह—

**त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥**

तुशब्दश्चोदितशङ्कानिवृत्त्यर्थः। नाऽयं दोषः। त्र्यात्मकत्वात् तेजोऽबन्नात्मकत्वात्। अपां तदात्मकत्वे कुतो ऽपां व्यपदेश? इत्यत आह—भूयस्त्वात्। तासामपां सायंप्रातराहुतिमारभ्य यावद्गर्भे भूयस्त्वात् ॥ २ ॥

नन्वाहुतिद्वारा ऽदृष्टेन सम्परिष्वक्तो गच्छतीति गम्यते, न तु भूतसूक्ष्मैरित्यत आह—

## प्राणगतेश्च ॥ ३ ॥

प्राणानां गतिः प्राणगतिः 'तमुत्क्रामन्त'मित्यादिनोक्ता। तस्याः प्राणानां भूतसूक्ष्माऽऽश्रयाणामवगतिरित्यर्थः। चकारः 'स एतास्तेजोमात्रा' इत्यादिश्रुतिं प्रमाणत्वेन समुच्चिनोति ॥ ३ ॥

## अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥४॥

'अग्निं वागप्येती'त्यग्निगतिः। आदिशब्देन 'वातं प्राणा' इत्यादिः। तस्या न प्राणानामाश्रयत्वेन भूतसूक्ष्मत्वमिति चेत तन्न। प्राणानां जीवेन सह गमनात् तत्र भाक्तत्वात् प्राणानामग्न्यादिगतिश्रुतिर्भाक्ता उपचरिता 'ओषधीर्लोमानी'तिवत्। तस्या भावो भाक्तत्वं तस्मात् ॥ ४ ॥

## प्रथमे ऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥

प्रथमे 'ऽग्नौ श्रद्धां जुह्वती'त्यस्मिन्नपामश्रवणान्नापां सर्वत्राऽनुवृत्तिरिति चत्तन्न। ता एव आप एव हि यस्मादुपपत्तेः अपां कारणानां कार्यस्य शुद्धाख्यस्य सद्भावः। आप इति श्रुतेरपि ॥ ५ ॥

## अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥

प्रश्ननिरूपणाभ्यां जीवानामश्रुतत्वादप्यधिष्ठितानां ग्रहणमयुक्तमिति चेन्न। कुतः? इष्टादिकारिणाम् 'अथ यइमे' इत्यादिना दक्षिणमार्गेण चन्द्रं यियासतां प्रतीतेः ॥ ७ ॥

'तद्देवानामन्नं यद्देवा भक्षयन्ती'ति श्रुतेश्चन्द्रप्राप्तिर्न पुरुषार्थ इत्यत आह—

## भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति॥७॥

तेषां देवानामन्नत्वं भाक्तमुपचरितम्। कुतः? अनात्मवित्त्वात् तेषाम्। यथा ऽस्माभिस्तेषामन्नत्वं भोग्यत्वेनोक्तं तथा श्रुतिर्दर्शयति 'अथ यो ऽन्या'मित्यादिना ॥ ७ ॥

पूर्वाधिकरणे ऽवरोहेऽपि परिवेष्टितस्य 'पञ्चम्यामाहुतावाप' इत्युपलम्भादारोहेऽपि कर्मसमवायिनीभिरद्भिः परिवेष्टितो गच्छतीत्युक्तम्, इदानीमवरोहे कर्माऽभावादपामप्यभाव इत्याक्षिप्य समाधत्ते—

## कृताऽत्यये ऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥

कृतस्य पुण्यस्याऽत्यये विनाशे ऽनुशयवान् कर्माऽनुशयवान् तत्राऽऽगच्छति । दृष्टा जातमात्रस्य सुखाद्यवाप्तिः । अथ वा 'तद्य इह रमणीयचरणा' इत्याद्या श्रुतिः, स्मृतिरपि 'तच्छेषेण विशिष्ट'मित्याद्या, ताभ्यां यथेतं यथागतम् अनेवं च तद्विपर्ययेणापि आकाशादिरूपेण प्रकारान्तरेणापि ॥ ८ ॥

## चरणादिति चेत् नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥

'तद्य इह रमणीयचरणा' इत्यत्र चरणादागमनं नाऽनुशयादिति चेन्न । यतो ऽनुशयोपलक्षणार्था चरणश्रुतिरिति कार्ष्णाजिनिराचार्यो मन्यते ॥ ६ ॥

## आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥१०॥

तस्य चरणशब्दस्य श्रौतशीलार्थपरित्यागेन लाक्षणिकाऽनुशयस्वीकारे शीलस्याऽऽनर्थक्यं प्रयोजनशून्यतैव स्यादिति चेत् । न । तदपेक्षत्वात् । तस्य शीलस्याऽपेक्षा यस्य कर्मण 'आचारहीन'मित्यादिस्मृतेः तदपेक्षं तस्य भावस्तत्त्वं तस्मात् ॥ १० ॥

## सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥

बादरिराचार्यश्चरणशब्देन सुकृतदुष्कृते एवाऽभिधीयेते इति मन्यते । तुशब्दो लक्षणव्यावृत्त्यर्थः ॥ ११ ॥

पूर्वाधिकरणे यावच्छ्रुतेरारब्धफलविषयत्वेन सङ्कोचः कृतस्ततोऽन्येन कर्मणा वर्तते इत्युक्त,मत्र तु चन्द्रमसमेव ते गच्छन्तीति सर्वश्रुतेस्तद्वन्न सङ्कोच इति प्रत्युदाहरणेनाक्षिपति—

## अनिष्टादिकारिणामपि च श्रुतम् ॥१२॥

इष्टापूर्त्तादिव्यतिरिक्तं कुर्वन्तीत्यनिष्टादिकारिणो ये तेषामप्यविशेषेण 'ये के चे'त्युपक्रम्य 'चन्द्रमसमेव ते सर्वे गच्छन्ती'ति श्रुतं यतो ऽतश्चन्द्रगमनम् । चकारो यौक्तिकत्वप्रदर्शनार्थः ॥ १२ ॥

## सङ्गमने त्वनुभूयेतरेषामारोहाऽवरोहौ तद्गतिदर्शनात् ॥ १३ ॥

तुशब्दो ऽनिष्टादिकारिणां चन्द्रगतिं व्यावर्तयति । संयमने याम्ये पुरे इतरेषामनिष्टादिकारिणां दुःखाऽनुभवार्थमारोहो दुःखमनुभूयाऽवरोहः । तावेवाऽऽरोहाऽवरोहौ । कुतः? तद्गतिदर्शनात् । तद्याम्यं पुरं प्रति या गतिस्तस्याः 'पुनः पुनर्वशमापद्यते मे' 'वैवस्वतं संगमनं जनाना'मित्याभ्यां दर्शनम् ॥ १३ ॥

सुपुरुषवचनविश्वासिनां नैतावता प्रत्यय इत्यत आह—

## स्मरन्ति च ॥ १४ ॥

स्मरन्ति च व्यासादयः संयमने गमनं तेषाम् । चकारः प्रसिद्धिसमुच्चयार्थः ॥ १४ ॥

तथापि लोकपालपुरे कथं दुःखित्व?मित्यत आह—

## अपि सप्त ॥ १५ ॥

नरका महारौरवप्रभृतयः स्मर्यन्ते पौराणिकैः ॥ १५ ॥

ननु न यमायत्तास्ते, तेषु चित्रगुप्तादीनां स्मरणादित्यत आह—

## तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥

तत्रापि तेष्वपि महारौरवादिषु तद्व्यापारात् तस्य यमस्य व्यापारः समाज्ञा तस्माद्यमायत्तत्वस्य चित्रगुप्तादीनामप्यविरोधः । चकारः शङ्कायां मतिमन्दत्वसूचनार्थः ॥ १६ ॥

ननु मार्गद्वयस्य प्रकृतत्वादन्यतरेण तैरपि गन्तव्यमित्यत आह—

## विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥

'एतयोः पथोरि'ति विद्याकर्मणोर्ग्रहणमिति यस्मात्तयोः 'तद्य इत्थं विदु'रिति विद्या 'इष्टापूर्ते दत्त'मिति कर्म । प्रकृतत्वात् । तेषां च तयोरभावादतो नाऽन्यतरेण गमनम् । तुशब्दो 'जायस्व म्रियस्वे'त्यनेन तृतीयं स्थानं दर्शयति ॥ १७ ॥

तथाप्याहुतिपञ्चकपूरणार्थं चन्द्रमसि तेषामपि गमनमित्यत आह—

न तृतीये तथोपलब्धेः ॥ १८ ॥

नाऽयमाहुतिनियमस्तृतीये स्थाने । कुतः? यूकादौ तथोपलब्धेः । आहुतिनियमस्याऽदर्शनात् ॥ १८ ॥

तद्दृष्टान्तेन जीवान्तरेऽपि स नियमो ऽनुमीयते इत्यत आह—

स्मर्यते ऽपि च लोके ॥ १९ ॥

नाऽयं मनुष्येष्वपि नियमः । द्रोणद्रौपद्यादीनां योनिमन्तरेणापि शरीरस्योत्पत्तिदर्शनात् । चकारात्पुराणेष्वपि ॥ १९ ॥

तथापि क चिद् दृष्टं भूयोदृष्टान्तेन बाध्यते इत्यत आह—

दर्शनाच्च ॥ २० ॥

स्वेदजोद्भिज्जयोराहुतिपञ्चकमन्तरेणाप्युत्पत्तिदर्शनात् । चकारो नियमभङ्गसमुच्चयार्थः ॥ २० ॥

ननु स्वेदजमेव नास्ति, अण्डजं जरायुजमुद्भिज्जमिति त्रयाणामेव श्रवणादित्यत आह—

तृतीयशब्दाऽवरोधः संशोकजस्य ॥ २१ ॥

तृतीयशब्द उद्भिज्जमित्येतस्मिन्नवरोधः स्वीकारः संशोकजस्य स्वेदजस्य ॥ २१ ॥

पूर्वाधिकरणे स्थानशब्दो मार्गपरत्वेन नीतः तृतीयमिति त्रित्वसंख्यायोगात्, तर्हि इहापि वायुर्भूत्वेत्युत्तरत्र वायुनादात्म्यश्रवणात् आकाशमित्यत्रापि अनुशायिनस्तेन सह तादात्म्यं स्यादिति दृष्टान्तेनाक्षिप्य समाधत्ते—

## साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

तैराकाशादिभिः समानो भावः साभाव्यम् ॥ २२ ॥

पूर्वाधिकरणे आकाशादिसमानरूपतामनुशायिनः प्राप्नुवन्तीत्युक्तं, तर्हि आकाशादेः प्राकृतप्रलयान्तमवस्थानादनुशायिनोऽपि तावदवस्थानमित्याक्षिप्य समाधत्ते—

## नाऽतिचिरेण विशेषात् ॥ २३ ॥

आकाशादिसमानरूपतायां जीवस्य नाऽतिदीर्घेण कालेन निर्गममिति । कुतः ? व्रीह्यादिभावात् । 'अतो वै खलु दुर्निष्प्रपतर'मित्यादिविशेषणात् ॥ २३ ॥

पूर्वाधिकरणे 'ऽतो वै खलु दुर्निष्प्रपतर'मिति तिलमाषादिष्वेव कश्चन विलम्बो नाऽऽकाशादिष्विति उक्तं, तर्हि जायन्तइति विशेषात्तिलमाषादिष्वनुशायिनां जन्म स्यादिति दृष्टान्तेनाक्षिप्य समाधत्ते—

## अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥

'इह व्रीहियवा' इत्यादावन्येन तिलमाषादिजीवेनाऽधिष्ठितम् अन्याऽधिष्ठितं तस्मिन् । तच्छरीराऽधिष्ठितएवानुशयी पूर्ववद्यथा वाय्वादौ संश्लेषमात्रं तद्वद्व्रीह्यादावपि । कुतः ? तत्रापि सुकृतदुष्कृतादिव्यापारमन्तरेण तद्भावाऽऽपत्तेरभिलापादुक्तत्वात् ॥ २४ ॥

## अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥

स्वर्गादवरोहिणः पशुहिंसालक्षणमशुद्धं पापमस्तीति चेन्न । पश्वादेर्हिंसाया वैदिकशब्दादागताया अवगतत्वात् ॥ २५ ॥

अस्तु व्रीह्यादिभावो विना पापमित्यत आह—

## रेतःसिग्योगोऽथ ॥ २६ ॥

अथ व्रीह्यादिभावाऽनन्तरं रेतःसिचापि योगो रेतःसिग्योगः । 'व्रीह्यात्मे'त्यादिना बहुत्वात्कण्डनाद्यवसरएव प्रवासितोक्तत्वान्न तेन योग इति भावः ॥ २६ ॥

नन्वस्तु प्रवासो बहुत्वं वा, अथापि कश्चन स्थित्वा तेन योगं यास्यतीत्यत आह—

## योनेः शरीरम् ॥ २७ ॥

योनेराधि अनुशायिनां शरीरान्तरं 'तद्य इह रमणीयचरणा इत्यादि श्रावयति शास्त्रं, तेनेदमवगम्यते तृतीयस्थानिनामेव व्रीह्यादिभावो नाऽनुशायिनाम् ॥ २७ ॥

## इति ब्रह्मसूत्रदीपिकायां तृतीयाध्यायस्य प्रथमः पादः ॥

——०*०——

एवं प्रथमेन पादेन कर्मफलस्य यातायातरूपत्वेन वैराग्यं निरूपितम्, इदानीं विरक्तस्य तत्त्वंपदार्थविवेकार्थं द्वितीयः पाद आरभ्यते ।

जागरणाद्यवस्थाया उक्तत्वात् दुर्विवेकत्वाच्च तत्र त्वमर्थस्य स्वप्रकाशत्वस्य स्वप्नाऽवस्थायामेव चोररीकृत्य पूर्वपक्षमाह—

## संध्ये सृष्टिराह हि ॥ १ ॥

जागरणसुषुप्तयोः सन्धौ भवं सन्ध्यं स्वप्नस्थानं तस्मिन् रथादीनां सृष्टिः सत्यैव । कुतः ? हि यस्मात् 'न तत्र रथा' इत्युपक्रम्य 'पथः सृजती'त्यन्तेनाह ॥ १ ॥

ननु सृजत इत्याक्षिप्तकर्तृको ऽयं लकारः, अत एव सत्यमित्यत आह—

## निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

एके शाखिनो ऽस्मिन्नेव संस्थाने कामानां निर्मातारमात्मानमामनन्ति 'कामं कामं पुरुषो निर्मिमाण' इति । नन्वत एव मनोरथमात्रत्वात् तेषामसत्त्वमित्यत आह—पुत्रादयश्च । कामा इति शेषः । काम्यन्ते इति कामः । यस्मात्पुत्रपौत्रादीनुपक्रम्याऽन्ते कामानामित्याह । आद्यश्चकारः प्राज्ञस्य कर्तुरभावेपि कर्तृमात्रसत्यत्वं समुच्चिनोति । द्वितीयश्चकारो मनोरथानामपि सत्यत्वमाह ॥ २ ॥

इदानीं सिद्धान्तमाह—

## मायामात्रं तु कात्स्न्र्येनाऽनभिव्यक्तस्वरूपत्वात् ॥ ३ ॥

तुशब्दो रथादीनां सत्यत्वं व्यावर्तयति। कुतः? तन्मायामात्रं मायैव स्वप्नदृष्टं यतः, तदपि कात्स्न्र्येनाऽनभिव्यक्तस्वरूपत्वात्। देशतः शतयोजनादिना कालतो रात्रिदिनादिना हृदयपुण्डरीके संवत्सरादिरूपेण मुहूर्तमात्रं शयानः सर्वामुपलभते यतः अतो बाधराहित्येनाऽनभिव्यक्तस्वरूपत्वात् अबाधितत्वेनाऽप्रतीयमानत्वादित्यर्थः। मायामात्रत्वात् ॥ ३ ॥

तर्हि न कश्चित् स्वप्ने परमार्थगन्धोऽपीत्यत आह—

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥

असत्योऽपि स्वप्नः सत्यत्वाद्यवाप्तिसूचको भवति। हि यस्मात् श्रुतेः 'यदा कर्मसु काम्येषु स्त्रिय'मित्यादेः 'पुरुषं कृष्णं कृष्णदन्त'मित्यादेश्च स्वप्नात् सत्यार्थस्य श्रुतेर्नायं श्रुत्युक्तोऽर्थोऽस्यार्थः। कुतः? आचक्षते च तद्विदः। तं स्वप्नाध्यायं वदन्तीत्यर्थः। 'आरोहणं गोवृषे'त्यादिना आचक्षते कथयन्ति। आद्यश्चकारः प्रतिबिम्बादीनां निदर्शनत्वसमुच्चयार्थः। द्वितीयश्चकार आच्छादितकुमारीभुजस्फुरणसमुच्चयार्थः ॥ ४ ॥

तथापि परमात्मना क्रियमाणत्वात् स्वप्नसृष्टेराकाशादिवत्सत्यता, न च जीवपरमात्मनोरैक्यम्, अन्यथा जीवस्य नित्यशुद्धबुद्धत्वादिकं स्यादित्यत आह—

## पराऽभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥

न नित्यशुद्धत्वादिकं नास्ति, किं तु तिरोहितम्। तर्हि प्रादुर्भावे नोपाय इत्यत आह—पराऽभिध्यानात्। परस्य परमात्मनोऽभिध्यानान्निदिध्यासनात् उत्पन्नसाक्षात्कारस्य प्रादुर्भवति। तुशब्द उपायान्तरं वारयति। कुत एतदित्याह—ततो ह्यस्य बन्धविपर्ययौ। हि यस्मात् ततः परमात्मनः सकाशात् अस्य जीवस्य तदज्ञानाद्बन्धः संसारः, विपर्ययो मोक्षः, तज्ज्ञानात् 'ज्ञात्वा देव'मित्यादिश्रुतेः ॥५॥

ननु जीवश्चेत्परमात्मनो ऽभिन्नांशस्ततो नित्यशुद्धत्वादीनां ना-ऽतिरोभावो ऽपीत्यत आह—

## देहयोगाद्वा सो ऽपि ॥ ६ ॥

वाशब्दो तिरोभावानिराकरणार्थः । जीवेश्वराऽन्यत्वनिवृत्त्यर्थः । सो ऽपि तिरोभावो ऽपि देहयोगादहं मनुष्य इत्याद्यभिमानात् ॥६॥

पूर्वाधिकरणे प्रपञ्चमिथ्यात्वं वर्णयता त्वंपदार्थस्य स्वयंप्रकाशत्वं दर्शितं तत्पदार्थेनैक्याय,तच्चेत्कस्यां चिदवस्थायामुपलभ्यं स्यात् तदा सम्भावितम्, न तूपलभ्यमित्याक्षिप्याह—

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥७॥

तस्य स्वप्नस्याऽभावस्तदभावः सुषुप्तिः । नाडीषु देहान्तःस्थितासु शिरासु आश्रय उत्सृप्य पुरीतद्वेष्टिते हृदये तदन्तःस्थात्मनि ब्रह्मणि अस्य जीवस्य । चकारात्पुरीतल्लब्धम् । एतत् त्रयमपि कुत? इत्यत आह—तच्छ्रुतेः । तत्र स्पष्टं 'नाडीषु सृतो भवति पुरीतति शेते स्वमपीतो भवती'ति नाडी पुरी, तत् ब्रह्माख्यं, श्रुतेर्विकल्पे त्वन्यतरबाधः स्यात् ॥ ७ ॥

## अतः प्रबोधो ऽस्मात् ॥ ८ ॥

यस्मात्सुषुप्तिरस्मिन्नात्मनि भवत्यतो ऽस्माद्धेतोरस्मदात्मनः प्रबोधो ऽस्य जीवस्याऽत आत्मनः प्राधान्यम् ॥ ८ ॥

पूर्वस्मिन्नधिकरणे ब्रह्मणि साभाव्यापत्तिरुक्ता जीवस्य, इह तु तत्सम्पन्नस्य मुक्तवन्न तस्य प्रबोधः किं त्वन्यस्येत्यनुपपत्त्या तामाक्षिप्याह—

## स एव तु कर्माऽनुस्मृतिशब्दविधिभ्यः॥१०॥

यस्तु परमात्मनि शयानस्तस्मात् स एव निर्गच्छति । तुशब्दो ऽन्यं वारयति । कुतः ? कर्माऽनुस्मृतिशब्दविधिभ्यः । कर्मोत्थितस्य शेषे ऽध्ययनादिः, अनुस्मृतिः पूर्वदिवसभोजनादिः, शब्दःप्रतिन्यायं प्रतियोनि'मित्यादि, विधि'र्ज्योतिष्टोमेने'त्यादिः। तेभ्यः। तस्यैवाऽनुसन्धाने कर्मादिकं न सिद्ध्येदित्यर्थः ॥ ९ ॥

पूर्वाधिकरणे सैव मूर्च्छेति दृष्टान्तेनाक्षिप्याह—

## मुग्धे ऽर्धसम्पत्तिः परिशेषात् ॥ १० ॥

मुग्धे मूर्छां प्राप्ते जीवे न सुषुप्तिवत् सर्वात्मना सम्पत्तिः। कुतः? परिशेषात्। न जागरणस्वप्नौ, वृत्तिज्ञानरहितत्वात्। नापि सुषुप्तिः, गात्रकम्पादीनामुपलम्भात्। नापि मृतिः, पुनरुत्थानात्। अतः प्रसक्तानां जागरणादीनां प्रतिषेधादन्यत्राऽप्रसक्तौ शिष्यमाणा या ऽर्धसम्पत्तिः सम्प्रत्ययः सोयं परिशेषस्तस्मात् ॥ १० ॥

पूर्वाधिकरणे ब्रह्मण्यर्धसम्पत्तिरुक्ता जीवस्य, सैवाऽनुपपन्ना, ब्रह्मणः सविशेषनिर्विशेषत्वेनाऽनेकरूपत्वेनाऽनिश्चितरूपत्वात् इत्याक्षिप्याह—

## न स्थानतोपि परस्योभयलिङ्गं सर्वत्र हि ॥११॥

परस्य परमात्मनः स्वभावत उभयलिङ्गमुभयरूपम्। 'अस्थूलमनण्वि'त्यादि 'मनोमयः प्राणशरीर' इत्यादि न स्थानतोपि पृथिव्यादिस्थानयोगादेरप्युभयलिङ्गं न। कुतः? हि यस्मात् सर्वत्र सर्वेषु वेदान्तेषु 'अशब्दमस्पर्शमरूप'मित्यादिनैकमेव श्रूयते ॥ ११ ॥

## न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥१२॥

न ब्रह्माऽशब्दादिगुणकमेकलिङ्गं कुतः? चतुष्पात् षोडशकल'मित्यादिना परस्य ब्रह्मणो भेदादिति चेन्न। कुतः? 'यश्चाऽयमस्यां पृथिव्या'मित्यादिना प्रत्येकं प्रत्युपाधि अतद्वचनात् ॥ १२ ॥

नन्वेकस्यां शाखायामिदं वचनं नाऽत्यन्तमादरणीयमित्यत आह—

## अपि चैवमेके ॥ १३ ॥

एवं भेददर्शननिन्दादिपूर्वकं 'मृत्योः स मृत्यु'मित्युपक्रम्य 'नेह नानास्ति किं चने'त्यभेदमेके शाखिन आमनन्ति। अपिचशब्देनाऽभेद एव युक्तोपि ॥ १३ ॥

ननु नाऽयं तर्कगम्यो ऽर्थः, श्रुतेश्चोभयत्र विद्यमानत्वादित्यत आह—

## अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥

हि यस्मात् अरूपवदेव ब्रह्म, न तु सगुणमवगन्तव्यम्। कुतः?

तत्प्रधानत्वात् । तस्याऽरूपवतः प्रतिपाद्यत्वात् 'अस्थूलमनण्वि'त्यादिभिर्वाक्यैः । एतच्च समन्वयसूत्रे स्थितम् ॥ १४ ॥

एवं तर्हि सगुणप्रतिपादकानां वाक्यानां वैयर्थ्यमित्यत आह—

## प्रकाशवच्चाऽवैयर्थ्यात् ॥ १५ ॥

यथा प्रकाशः सूर्यादिः तत्तदङ्गुल्यादिऋजुवक्रतामनु स्वयमपि ऋजुर्वक्रो वा एवमुपाधिभेदेनाऽऽत्मनः सगुणत्व,मतस्तद्वाक्यानामवैयर्थ्यं तस्मात् । चकारो घटाऽऽकाशादिनिदर्शनसमुच्चयार्थः ॥१५॥

नन्वसत्यपि रूपान्तररहिते 'कृत्स्नः प्रज्ञानघन' इति श्रुतिराह तनूमनसः स्थैर्यार्थं रूपस्य प्राधान्यमित्यत आह—

## आह च तन्मात्रम् ॥ १६ ॥

तन्मात्रं चैतन्यमात्रं रूपान्तररहितं 'कृत्स्नः प्रज्ञानघन' इति श्रुतिराह । चकारो नीरूपे मनसः स्थैर्यं वारयति ॥ १६ ॥

नन्वियं श्रुतिरेकरूपत्वं विधत्ते, न पुना रूपान्तरं प्रतिषेधतीत्यत आह—

## दर्शयति चाऽथो अपि स्मर्यते ॥ १७ ॥

अथो यस्माद् रूपान्तरप्रतिषेधं दर्शयति 'नेती'त्यादिना नाऽयं प्रतिषेधो लौकिकः । यतः स्मर्यतेऽपि 'न सत्तद्' इत्यादिना 'ममैवें'त्यादिना च ॥१७॥

ननु प्रतीयमानो भेदः कथमतात्त्विक? इत्यत आह—

## अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥

यत एकरूपताऽस्योक्ता नानारूपत्वं निराकृतम्, अस्मादेव कारणात् प्रतीयमानस्य भेदस्योपमा न भवति । यथा जले सूर्यकः सूर्यप्रतिबिम्बः । आदिशब्देन चन्द्रप्रतिबिम्बादि । तथा च श्रुतिषु 'यथा स्वयं ज्योतिरात्मे'त्यादिषु 'एक एवे'त्यादिषु च तदुपमीयते॥१८॥

उपाधिभेदादनेकत्वमाक्षिपति—

## अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥

यथा ऽम्बु सूर्यमूर्तेर्व्यवहितं गृह्यते एवमम्बुवत्परमात्मनो भिन्नस्योपाधेः परमात्मनो वा ऽमूर्तस्याऽग्रहणात् न तथात्वं न सूर्यकादिसमानता ऽस्य भेदस्य ॥ १९ ॥

समाधत्ते—

## वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २० ॥

दृष्टान्तदार्ष्टान्तिकयोर्न साम्यं लोके ऽपि, किमुत वेदे । एकस्य कथं तिर्यगादिविचित्ररूपाणी?त्यस्य समाधानार्थं सूर्यकादिदृष्टान्तो विवक्षिते ऽर्थे श्रुत्योक्तः । विवक्षितं तु यथा जलवृद्ध्या वृद्धिभाक्त्वं जलस्य ह्रासे ह्रासभाक्त्वं तच्चलनादिभाक्त्वम् एकस्यापि तद्भेदात् भेदभाक्त्वमिति । तदाह—वृद्धिह्रासभाक्त्वमुपाधेरस्य । कुतः ? उपाधौ देहादावन्तर्भावादहमित्याद्यभिमानक्रोडीकृतत्वात् । कुत एत?दित्यत आह—एवमुभयस्य दृष्टान्तस्य दार्ष्टान्तिकस्य सामञ्जस्यात् ॥ २० ॥

ननु शरीरान्तः परमात्मप्रवेशे सत्युपमागवेषणं, न तस्माद्भिन्नजीवप्रवेश इत्यत आह—

## दर्शनाच्च ॥ २१ ॥

'पुरः स पक्षी भूत्वा पुरुष आविशत्' 'अनेन जीवेने'त्यादिना परमात्मन एव प्रवेशस्य दर्शनात् । चकारो जीवस्य परमात्मव्यतिरिक्तत्वग्राहकप्रमाणाऽभावसूचनार्थः ॥ २१ ॥

पूर्वाधिकरणे निर्विशेषमेव ब्रह्मेत्युक्तं निषेधप्राधान्यात्, एवं च नेति प्राधान्याद्ब्रह्मापि न स्यादित्याक्षिप्याह—

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥

प्रकृतं मूर्त्ताऽमूर्त्तरूपेण यदेतावत्त्वमियत्ता तस्य भावः प्रकृतैतावत्त्वं तदेव प्रतिषेधति निराकरोति नेतिनेति शब्दः । कुत एत?दित्यत आह—ततो ब्रवीति च भूयः । ततस्तस्मात्प्रतिषेधादनन्तरं भूयः पुनरन्यत् परमस्तीति ब्रवीति । चकारो ऽत्यन्तसतो निर्धारणसमु-

ध्यार्थः। अथ वा ततो ब्रवीति च भूय इति ततः प्रतिषेधानन्तरं भूयः पुनर्ब्रवीति 'अथ नामधेयमस्य सत्यस्य सत्य'मित्यादिना ॥२२॥

तादृशं ब्रह्म चेत्कस्माच्चक्षुरादिभिर्न गृह्यत?इत्यत आह—

## तदव्यक्तमाह हि ॥ २३ ॥

तद्ब्रह्म न व्यक्तं रूपादिहीनमव्यक्तम्। कुतः? हि यस्मादाह श्रुतिः 'न चक्षुषा गृह्यते नापि वाचे'त्यादिना। स्मृतिरपि 'अव्यक्तोऽय'मित्यादिना ॥ २३ ॥

ननु श्रुतिवचनात्तादृशस्य सत्त्वे कथं विश्वासः कदा चिदपि अप्रत्यक्षतायाः?मित्यत आह—

## अपि संराधने प्रत्यक्षाऽनुमानाभ्याम् ॥२४॥

संराधनं भक्तिध्यानप्रणिधानाद्यनुष्ठानं तस्य संराध्यमानस्य संराधनं तस्मिन्योगिनः पश्यन्ति। तत्कुतः? प्रत्यक्षाऽनुमानाभ्याम्। प्रत्यक्षं श्रुतिः 'प्रत्यगात्मानमैक्षत' 'ततस्तु तं पश्यति निष्कल'मित्यादिः। अनुमानं स्मृतिः 'ज्योतिः पश्यन्ती'त्यादिश्च। श्रुतावविश्वसितस्य प्रत्यक्षेणापि विश्वासमाहापिशब्दः ॥ २४ ॥

ननु संराध्यसंराधकभावश्चेत्स एव ब्रह्मभेदो ब्रह्मणो विशेषात्मत्वं च स्यादित्यत आह—

## प्रकाशादिवच्च वैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥

यथा प्रकाशकाः सवितृप्रभृतयोऽङ्गुलिकरकोदकप्रभृतिषु कर्मसूपाधिभूतेषु सविशेषा इवाऽवभासन्ते, न च स्वाभाविकीमविशेषात्मतां जहति, एवमुपाधिनिमित्त एवाऽयमात्मभेदः, स्वतश्चैकात्म्यमेव। तथा हि वेदान्तेष्वभ्यासेनाऽसकृज्जीवप्राज्ञयोरभेदः प्रतिपाद्यते। अक्षराणि त्वेवं योज्यानि—कर्मण्युपाधौ प्रकाशश्च उपाधौ स्थितो भिन्नरूपेण वैशेष्यमेवाऽवलम्बते एवं प्रकाशादिवत् स्वरूपेणाऽवैशेष्यमवलम्बते परः। आद्यश्चकारस्तदवलम्बने परत्वाऽभावं परमेश्वरस्याह। कुतः? अभ्यासात्। जीवब्रह्मणोरभेदस्येति शेषः ॥ २५ ॥

तथापि परिच्छिन्नस्य जीवस्य कथमनन्तेन परमात्मनैक्यमुपपन्नं? नैतद्युक्तिमात्रम्

अतो ऽनन्तेन तथा हि लिङ्गम् ॥ २६ ॥

हि यस्माद्यथोक्तं तथा लिङ्गं 'ब्रह्म वेद ब्रह्मैव भवती'ति ॥२६॥

इदानीं स्वमतविशुद्धौ भेदाऽभेदवादमुत्थापयति—

उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७ ॥

तुशब्दः संराध्यसंराधकयोरौपाधिकं भेदं व्यावर्तयति 'ततस्तु त' मित्यादिना, ध्यातृध्येयभावस्य परमित्यादिना, गन्तृगन्तव्यभावस्य 'यतः सर्वाणि भूतानि' इत्यादिना, नियन्तृनियम्यभावस्य भेदस्य 'तत्त्वमसि' 'अहं ब्रह्माऽस्मी' त्यादिना ऐक्यस्योभयस्य व्यपदेशाद्भेदाऽभेदौ जीवब्रह्मणोरहिकुण्डलवत्। यथा ऽहेः कुण्डलाऽऽकारो नाऽत्यन्तं भिन्नः, पृथगुपलम्भात्। न चाऽत्यन्तमभिन्नः, दण्डायमाने तस्मिन् तथा ऽनुपलम्भात्। एवं जीवोपि ॥ २७ ॥

नन्वेवं जीवस्याऽनित्यत्वं स्यादित्यत आह—

प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥

अथ वा प्रकाशाश्रयवदेतत्प्रतिपत्तव्यम्। यथा प्रकाशः सावित्रः तदाश्रयश्च सविता नाऽत्यन्तभिन्नः उभयोरपि तेजस्त्वाऽविशेषात्, अथ च व्यपदेशभाजौ भवत एवमिहापीति ॥ २८ ॥

समाधत्ते—

पूर्ववद्वा ॥ २९ ॥

वाशब्दो न भेदाऽभेद इत्याह, किन्तु यथा पूर्वमुपन्यस्तं प्रकाशादिवच्चाऽवैशेष्यमिति तथैतत् ॥ २९ ॥

नन्वेवं भेदश्रुतेरपि निर्वाहे कुतो ऽयमेव पक्ष? इत्यत आह—

प्रतिषेधाच्च ॥ ३० ॥

'नान्यो ऽतो ऽस्ति द्रष्टे' त्यादिना ब्रह्मणो व्यतिरिक्तस्य प्रतिषेधात्। चकारो भेदश्रुतेरसत्त्वेन भेदाऽभेददुर्भणत्वसमुच्चयार्थः ॥३०॥

पूर्वाधिकरणे प्रतिषेधादन्यस्य ब्रह्मणः श्रुत्योक्तत्वादस्ति ब्रह्मे-त्युक्तं, तर्हि ब्रह्मव्यतिरिक्तमप्यस्ति श्रुत्युक्तत्वादित्याक्षिपति—

## परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥३१॥

परमेश्वरात्परमन्यदस्ति। कुतः ? सेतून्मानसम्बन्धभेदव्यपदेशे-भ्यः। सेतुव्यपदेशः 'पुरुषो ऽन्तरादित्ये पुरुषो ऽन्तराक्षिणी'ति। तेभ्यः। न हि सर्वसाम्यात्परस्यैते उपदेशा उचिताः॥ ३१ ॥

## सामान्यात्तु ॥ ३२ ॥

तुशब्दो ब्रह्मणः परमन्यद्व्यावर्तयति ॥ ३२ ॥

कथं तर्हि सेतुशब्दो ब्रह्मणि? इत्यत आह—

## सामान्याद् बुद्ध्यर्थः पादवत् ॥ ३३ ॥

बुद्ध्यर्थः उपसानार्थः। तत्र निदर्शनं पादवत्। यथा पादा मनसो वागादयः। अथ वा कार्षापणस्य पादा व्यवहारार्थं तद्वत् ॥ ३३ ॥

तर्हि सम्बन्धभेदयोः कथं व्यपदेश ? इत्यत आह—

## स्थानविशेषात् प्रकाशादिवत् ॥ ३४ ॥

स्थानमिव स्थानं तस्य विशेषो बुद्ध्याद्युपाधिराहित्यं सुषुप्ताऽव-स्थायां, न तु परिमितत्वेन सत्तापत्तिरतो न सम्बन्धकृतदूषणम् । भेदपक्षे स्थाने आदित्यमण्डले ऽक्षिणीव विशेषस्तस्मात्, न तु स्वरू-पभेदोपदेशः। प्रकाशादिवदित्युपमोपादानम्। यथैकस्य प्रकाशस्य सौरस्य यथोपाधियोगादुपजातस्य भेदव्यपदेशो भवति उपाध्यु-पगमात् सम्बन्धव्यपदेशो भवति। आदिशब्देन यथा सूचीपाशादि-षूपाध्यपेक्षयैव तौ व्यपदेशौ भवतस्तद्वत् ॥ ३४ ॥

ननु कस्मात् मुख्यं सम्बन्धं परित्यज्य उपचरितः स्वीक्रियते ? इत्यत आह—

## उपपत्तेश्च ॥ ३५ ॥

'स्वमपीतो भवती'ति स्वरूपसम्बन्धमेवाऽऽमनन्तीति चाऽस्यो-

पाधिप्रलयमन्तरेण । न च नगरवदस्त्युपपत्तिः । अत उपपत्तेरयमेव सम्बन्धः । भेदो ऽपि नाऽन्यद्दश्य इति चकारार्थः ॥ ३५ ॥

उक्तेभ्यो हेतुभ्यः परोक्तनिवृत्ति,र्नैतावता स्वपक्षसिद्धिरित्यत आह—

## तथा ऽन्यप्रतिषेधात् ॥ ३६ ॥

यथा सेत्वादिव्यपदेशो ऽनवच्छिन्न उपपन्नस्तथा 'स एवाऽधस्ता'दित्यादिना ब्रह्मणो ऽन्यस्य प्रतिषेधात् ॥ ३६ ॥

तथापि ब्रह्मणस्त्रेधा परिच्छेदशून्यत्वाऽभावात् परमन्यदनुमेयमित्यत आह—

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥३७॥

अनेन सेत्वादिनिराकरणेनाऽन्यप्रतिषेधेन । न च सर्वगतत्वं त्रेधा परिच्छेदशून्यत्वम् । किं तर्कमात्रेण तत्रे?त्याह—आयामशब्दादिभ्यः आयामशब्दो व्याप्तिवचनः शब्दः 'यावानाकाश' इत्यादिः । आदिशब्देन नित्यत्वादिशब्दो ऽर्थो वा तेभ्यः ॥३७॥

पूर्वाधिकरणे निर्गुणमेव ब्रह्म तत्पदार्थलक्ष्यं नाऽतो ऽधिकं किंचिदस्ति, तर्हि निर्गुणस्यापि कर्मफलपारतन्त्र्यात् सेतून्मानादिकमित्याक्षिप्याह—

## फलमत उपपत्तेः ॥ ३८ ॥

फलं सुखदुःखादि अतः परमेश्वरात् । कुतः ? चेतनो हि स्वतन्त्रः कृतं शुभाऽशुभं विज्ञाय तदनुसारि फलं प्रयच्छतीत्युपपत्तेः ॥३८॥

किं तर्कमात्र?मित्याशङ्क्याह—

## श्रुतत्वाच्च ॥ ३९ ॥

'अन्नादो वसुदान' इत्यादिना । चकार 'ईश्वरप्रेरितो गच्छे'दित्यादिस्मृतिमाह ॥ ३९ ॥

ईश्वरे फलदातृत्वमाक्षिपति—

## धर्मं जैमिनिरत एव ॥ ४० ॥

जैमिनिस्त्वाचार्यो धर्मं फलस्य दातारं मन्यते। अत एव श्रुतोपपत्तिभ्यामेव श्रुतं 'ज्योतिष्टोमेने'त्यादिना, उपपत्तिरीश्वरश्चेद्दाता ऽकृतेपि कर्मणि दद्यात् सुखदुःखादि, कृतेपि न दद्यात्स्वतन्त्रत्वादेव ॥ ४० ॥

समाधत्ते—

## पूर्वं तु बादरयणो हेतुव्यपदेशात् ॥ ४१ ॥

तुशब्द ईश्वराऽनधिष्ठितस्य कर्मणः फलदातृत्वं व्यावर्तयति। किं तु यः पूर्वमुक्तस्तमेवेश्वरं फलदातारं बादरायण आचार्यो मन्यते। कुतः ? हेतुव्यपदेशात् । हेतुरीश्वरो धर्माऽधर्मयोः फलस्य च 'एष ह्येवे'त्यादिश्रुत्या 'यो यो यां या'मित्यादिस्मृत्या च व्यपदिश्यते । हेतोः कारणस्य व्यपदेशो हेतुव्यपदेशस्तस्मात् ॥ ४१ ॥

## इति ब्रह्मसत्रदीपिकायां तृतीयाऽध्यायस्य द्वितीयः पादः ॥

---

द्वितीये पादे तत्त्वंपदार्थौ निर्णीतौ, तृतीयपादे पुनरुक्ताऽऽकाङ्क्षितपदार्थोपसंहारेण सगुणनिर्गुणब्रह्मवाक्यानाम् अर्थो ऽवधार्यते। सगुणो विद्याभेदो ऽभेदश्च गुणोपसंहारो ऽनुपसंहारश्चोपासनार्थः। ततः शुद्धान्तःकरणे ज्ञानोत्पादे ब्रह्माप्नोति इति फलम्। निर्गुणे तु विद्याया ऐक्यमेव वाच्याऽऽनन्दादिगुणानामुपसंहाराल्लक्ष्यमाणैकरसवाक्यार्थबोधः फलमित्यत आह—

## सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥

सर्ववेदान्तप्रत्ययानि विज्ञानानि यस्मिन् तत्सर्ववेदान्तप्रत्ययं प्राणविज्ञानं सर्ववेदान्तप्रत्ययानि विज्ञानानि तस्मिन् तस्मिन्वेदान्ते तान्येव तानि भवितुमर्हन्ति । कुतः ? चोदनाद्यविशेषात् । आदिशब्देन संयोगरूपसमाख्यानां ग्रहणम्। 'यो ह वै ज्येष्ठं च श्रेष्ठं च वेदे'ति छन्दोगानां वाजसनेयिनां च चोदनाया अविशेषः । 'ज्येष्ठश्च श्रेष्ठश्च स्वानां भवती'ति प्रयोजनसंयोगो ऽप्यविशिष्टः। रूपमपि ज्येष्ठश्रेष्ठगुणकमेव। समाख्यापि प्राणविद्येति ॥ १ ॥

भेदान्नेति चेन्नैकस्यामपि ॥ २ ॥

वाजसनेयिनां छन्दोगानां पञ्चाऽग्निभेदान्नैका विद्येति चेत्तन्न । एकस्यामपि विद्यायामयं भेदो न दोषाय, साम्येन पञ्चानामप्यग्नीनां प्रत्यभिज्ञायमानत्वात् । एवमन्यत्रापि ज्येष्ठत्वादिगुणानामेकरूपत्वान्न भेदः ॥ २ ॥

'तेषामेवैता'मित्यादिना शिरोव्रतादिधर्मभेदाद्विद्याभेद इत्यत आह—

स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥

स्वाध्यायस्यैष धर्मो न विद्यायाः । कथं ? हि यस्मात्तथात्वेन स्वाध्यायधर्मत्वेन समाचारे वेदव्रतोपदेशपरे ग्रन्थे आथर्वणिका इदमपि वेदव्रतत्वेन व्याख्यातमित्यामनन्ति 'नैतदचीर्णव्रतोऽधीते' इति चाऽधिकृतविषयादेतच्छब्दादध्ययनशब्दाच्च । तदाह—अधिकाराच्च सववच्च तन्नियमः । तस्य शिरो नियमोपि तेषामेव, तत्र निदर्शनं सववत् । यथा सप्त सौर्यादयः शतौदनपर्यन्ताः सवा एकाग्निसम्बद्धास्तेषामिव तद्वत् ॥ ३ ॥

ननु न्यायमात्रेण कथमवाचनिकं स्वीकर्तुं शक्य?मित्यत आह-

दर्शयति च ॥ ४ ॥

'सर्वे वेदा यत्पद'मित्यादिना विद्यैकत्वम् । चकारो न्यायमात्रशङ्काया अनुत्थानं दर्शयति ॥ ४ ॥

पूर्वाधिकरणे विद्यैक्यं निरूपितं, तन्निष्प्रयोजनमित्याशङ्क्याह—

उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥५॥

शाखान्तरोपदिष्टानां गुणानां शाखान्तरविज्ञानमुपसंहारः स्वीकार्यः । कुतः ? अर्थस्य प्रयोजनस्य विशिष्टज्ञानोपकारस्याऽभेदात् । समाने चोभयत्रापि तस्मिन्नेकस्मिन् ज्ञाने स्थिते । अत्र निदर्शनं विधिशेषवत् । विधिशेषाणामग्निहोत्रादिधर्माणां शाखान्तरे श्रुतानां यथा शाखान्तरे उपसंहारस्तद्वत् ॥ ५ ॥

पूर्वाधिकरणे चोदनाद्यविशेषात् विद्यैक्यमुक्तम्, अत्रापि प्राण-विद्येति सामाख्याया एवैक्यात् विद्यैक्यमिति वदन्तमपवदिति सूत्रा-ऽन्वयेन—

## अन्यथात्वं शब्दादिति चेन्नाऽविशेषात् ॥६॥

उद्गानस्य कर्तृत्वमुद्गीथरूपत्वं वाजसनेयके छान्दोग्ये च प्रतीयते 'त्वं न उद्गाये'ति, वाजसनेयकेऽपि 'तमुद्गीथमुमासां चक्रिरे' इति शब्दाऽभेदादिति चेत्तन्न । कुतः ? अविशेषाद् । देवाऽसुरसंग्रामादे-र्भूयसः ॥ ६ ॥

उभयत्रापि सिद्धान्तमाह—

## न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥७॥

न वा नैव विद्याया ऐक्यम् । कुतः ? छान्दोग्ये 'ओमित्येतद-क्षरमुद्गीथ' मित्युपक्रम्योद्गीथाऽवयवस्योद्गीथत्वेनोपासनमभिधाय प्राणस्यापि उद्गीथत्वमाह 'तद्ध्युद्गीथ'मिति । वाजसनेयके तु सम-आया उद्गीथभक्तेः कर्ता 'त्वं न उद्गाये'ति । अतः प्रकरणभेदात्परोव-रीयस्त्वादिवदेकस्यां शाखायां निदर्शनं 'स एष परोवरीयानुद्गीथ' इत्याकाशे परोवरीयस्त्वादिधर्मिण्युद्गीथे हिरण्यश्मश्रुत्वादिध-र्मिणि च परस्परं न गुणोपसंहारस्तद्वत् ॥ ७ ॥

## संज्ञायाश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥

संज्ञायाः प्राणविद्येत्यस्या अभेदाद्विद्याया अप्यभेद इति चेत् चोद्यं तदुक्तं निराकृतं न वा प्रकरणभेदादित्यत्र । तदपि संज्ञायां ऐक्यमपि प्रसिद्धभेदेष्वपि परोवरीयस्त्वादावुद्गीथ इत्यग्निहोत्रद-र्शपूर्णमासादौ काठकमिति अस्ति तु अस्त्येव ॥ ८ ॥

पूर्वाधिकरणे 'ओमित्येतदक्षरमुद्गीथ'मिति छन्दोगानामुपक्रमा-द्विद्याभेद उक्तः, इदानीं तस्योङ्कारस्योद्गीथो ऽपि विशेषणं न दृष्ट-विधिर्नाऽपवादो न चैक्यमिति बुद्धिसन्निधितामाह—

## व्याप्तेश्च समञ्जसम् ॥ ९ ॥

चशब्दस्त्वर्थः । स ह्यध्यासाऽपवादैक्यानि निराकरोति । व्या-

ते: सर्ववेदसाधारण्यात् ओङ्कारस्य। स तादृशो मा भूदित्युद्गीथशब्दं विशेषणमाह। समञ्जसं चैतद्विशेषणम्, अन्यथा व्याप्तस्यैव ग्रहणं स्यात् ॥ ९ ॥

पूर्वाधिकरणे ओङ्कारस्योद्गीथो विशेषणमित्युक्तं, सर्वप्राणे च व्यावृत्त्यर्थं, तद्वदत्रापि विशिष्टत्वादिगुणा अन्यत्वव्यावृत्त्यर्था इति दृष्टान्तेनाक्षिप्याह—

## सर्वाऽभेदादन्यत्रेमे ॥ १० ॥

इमे विशिष्टत्वादयो गुणा यत्र नोक्तास्तत्रासीरन्; कुतः? सर्वाऽभेदात्। सर्वस्य प्राणस्य विज्ञानस्यैकस्याऽभेदात् ॥ १० ॥

पूर्वाधिकरणे प्राणस्य विशेषणत्वेन शाखान्तरगता गुणा वशिष्ठत्वादय उपसंहृताः, न तु ब्रह्मणः सविशेषत्वमिति न शाखान्तरगता आनन्दादय उपसंहर्तव्या इत्याक्षिप्याह—

## आनन्दादयः प्रधानस्य ॥ ११ ॥

यत्र शाखान्तरे आनन्दादयो धर्मा नोक्ताः प्रधानस्य ब्रह्मणस्तत्र ते उपसंहर्तव्याः। कुतः? सर्वाऽभेदादेव ॥ ११ ॥

एवं चेत् प्रियशिरस्त्वादीनामुपसंहारप्राप्तिरित्यत आह—

## प्रियशिरस्त्वाद्यप्राप्तिरुपचयाऽपचयौ हि भेदे ॥ १२ ॥

प्रियशिरस्त्वादेरुपसंहाराऽप्राप्तिः। कुतः? हि यस्माद् भेदे सत्युपचयाऽपचयौ भवतो, न त्वभेदेऽपि। प्रियशिरस्त्वादयश्च स्वयमपि तारतम्येन वर्तन्ते, भोक्तृभेदाच्च प्रियशिरस्त्वादयः कृत्वाचिन्तयोक्ताः संयद्वामसत्यकामत्वादीनामप्राप्तिं दर्शयितुम् ॥ १२ ॥

यथा प्रियशिरस्त्वादयो नोपसंहार्याः तद्वदानन्दादयोऽपीत्यत आह—

## इतरे त्वर्थसामान्यात् ॥ १३ ॥

तुशब्दो ह्युपसंहार्यत्वं व्यावर्तयति। इतरे आनन्दादय उपसंह-

तव्याः। कुतः ? अर्थसामान्यात्। अर्थस्य प्रतिपाद्यस्य ब्रह्मणः सामान्यात् एकरूपाऽऽपन्नत्वात् ॥ १३ ॥

पूर्वाधिकरणे ब्रह्मण ऐक्याद्वाच्ये तत्पदार्थे आनन्दादीनामुपसंहार उक्तः शब्दसामर्थ्यात्तर्हि तद्व'दिन्द्रियेभ्यः परा ह्यर्था' इत्यादौ वाच्याऽवगतेरर्थादिन्द्रियादयः स्वतन्त्राः प्रतिपाद्यन्तइति दृष्टान्तेनाक्षिप्याह—

## आध्यानाय प्रयोजनाऽभावात् ॥ १४ ॥

'इन्द्रियेभ्यः परा ह्यर्था' इत्यादिना परम्परा पुरुषान्तोक्ता, न सा प्रतिपाद्या। कुतः ? प्रयोजनाऽभावात्। तर्हि पुरुषोपि न प्रतिपाद्य इत्यत आह—आध्यानाय ध्यानपूर्वकाय सम्यग्दर्शनाय पुरुषः प्रतिपाद्यः ॥ १४ ॥

आध्यानं चेन्द्रियादिप्रतिपादनेपि स्यादित्यत आह—

## आत्मशब्दाच्च ॥ १५ ॥

'गूढोत्मा न प्रकाशत'इति पुरुषे आत्मशब्दात् तस्यैव गूढत्वात्प्रतिपाद्यप्रतिपत्त्यर्थमेव त्वियं परम्परा न स्वतन्त्रा। चकारो नैतेषामन्यतमप्रतिपादने सर्वप्रतिपादेन वा ऽऽध्यानं सिद्ध्यतीत्याह ॥१५॥

पूर्वाधिकरणे संभवत्येकवाक्यत्वे वाक्यभेदो न युक्तस्तर्हि 'आत्मा वा इदमेवे'त्यादौ हिरण्यगर्भः स्वीकरणीयस्तत्र वाक्यभेदाऽभावादिति दृष्टान्तेनाक्षिप्य समाधत्ते। अथ वा 'सदेवे'ति छन्दोगानां 'यो ऽयं विज्ञानमय' इति वासजनेयकानां चैकवाक्यताऽभावान्न पूर्ववद्विद्यैक्यमित्याक्षिप्य समाधत्ते—

## आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥

'आत्मा वा इदमेक एवासी' दित्यत्रात्मनः परमाऽऽत्मनो गृहीतिर्ग्रहणम्। किंवत् ? यथा 'तस्माद्वा एतस्मदात्मन' इत्यत्र सृष्टिप्रसङ्गेन तद्वत्। कुत? इत्यत आह—उत्तरात्। 'स ऐक्षते'त्यादेः ॥१६॥

## अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥

अम्भःप्रभृतीनां सृष्टेरन्वयादवगतत्वात् न पर आत्मशब्दाऽभि-

धेय इति चेत् तन्न स्यात् पर आत्मशब्दाऽभिधेयो भवेत्। कुतः? 'आत्मा वा इदमेक एवे'त्यवधारणात्। अथ वा 'सदेवे'त्यादिना सच्छब्देनात्मना गृहीतिरितरवद्वाजसनेयके 'कतम आत्मे'ति यथा आत्मशब्देनाऽऽत्मगृहीतिस्तद्वत्। कुतः? उत्तरात्। 'ऐतदात्म्यमिदं सर्वं'मित्युपसंहारगतैतदात्म्यशब्दात्। 'सदेवे' त्युपक्रमाऽन्वयान्नात्मनो ग्रहणमिति चेत् तन्न। 'येनाऽश्रुत'मित्यादिना एकविज्ञानेन सर्वविज्ञानस्य 'सदेवे'त्यनेनोत्पत्तेः प्रागन्याऽसत्त्वस्य चाऽवधारणात्। तस्य चाऽऽत्मग्रहणे उपपन्नत्वं नाऽन्यथा ॥ १७ ॥

पूर्वाधिकरणे संदिग्धे सदुपक्रमस्य वाक्यशेषान्निर्णय उक्तः, एवमिहा'ऽश्यशिष्यन्त आचामन्ती'त्यादेर्वर्तमानापदेशत्वेन विधित्वसंदेहे 'अशिष्यन्नाचामेदिति वाक्यशेषादाचमनस्य विधित्वनिश्चय इत्याक्षिप्य समाधत्ते—

## कार्याख्यानादपूर्वम् ॥ १८ ॥

'पुरस्ताच्चोपरिष्टाच्चाऽद्भिः परिदधाती'ति छन्दोगाना'मशिष्यन्नाचामेदशित्वा चाऽऽचामे'दिति वाजसनेयिनां यदाचमयनं न तद्विधेयम्। कुतः? कार्याख्यानात्। प्रायश्चित्त्यर्थं कार्यत्वेन प्राप्तस्य स्मार्तस्याऽऽख्यानादनुवादात्। किं तर्हि विधेय?मित्यत आह—अपूर्वमेव 'तदेनमनग्नं कुर्वन्तो मन्यन्ते' इति अनग्नताचिन्तनं प्राप्तं विधेयम् ॥१८॥

पूर्वाधिकरणे प्राप्ताऽऽचमनाऽनुवादेनाऽनग्नताचिन्तनं विधेयमित्युक्त,मिह तु वाक्ययोः कस्य विधेयत्वं कस्याऽनुवादत्व?मित्यनिश्चयात् द्वयोरपि विद्याद्वयविधित्वेनाऽन्योन्यं गुणाऽनुपसंहार इत्याक्षिप्य समाधत्ते—

## समानएवं चाऽभेदात् ॥ १९ ॥

समानेपि शाखाऽभेदे वाजसनेयके एवं गुणोपसंहारो यथा भिन्नशाखायां कृतः, शाण्डिल्यविद्यायां मनोमयत्वादीनां गुणानां बृहदारण्यके च मनोमयत्वादीनां प्रत्यभिज्ञायमानत्वाद्विद्याया अभेदस्तस्मात् ॥ १९ ॥

पूर्वाधिकरणे एकशाखायामभ्यासाच्छाण्डिल्यविद्याभेदप्रसक्तावपि प्रत्यभिज्ञानाद्विद्यैक्यगुणोपसंहार उक्तस्तर्हि इहापि सत्यस्य ब्र-

ह्मणो मण्डलद्वयवर्तिन ऐक्यात् उपनिषदोरप्युभयत्र चिन्तनमिति दृष्टान्तेनाक्षिपति—

सम्बन्धादेवमन्यत्रापि ॥ २० ॥

'तस्योपनिषदहरिति तस्योपनिषद'मिति यथा शाण्डिल्यविद्यायां बृहदारण्यके गुणोपसंहार एवमन्यत्रापि आदित्ये चक्षुषि चोपनिषदोरविभागेन चिन्तनम् । कुतः ? एकविद्यासम्बन्धात् ॥ २० ॥

सिद्धान्तमाह—

न वा विशेषात् ॥ २१ ॥

त्वदुक्तं नैव । कुतः ? आदित्येऽहरिति चक्षुष्यहमिति स्थलयोर्विशेषात् उपनिषदोरपि विभागः ॥ ३१ ॥

ननु स्थानभेदाद्धर्मभेदा नाऽन्यत्र नीयन्ते इत्यत आह—

दर्शयति च ॥ २२ ॥

'तस्यैतस्य तदेव रूप'मित्यादिना अतिदेशात्स्थानभेदात् धर्मभेदः । चकारो राजादीनां स्थानभेदाद्धर्मभेदप्रसिद्धिमाह ॥ २२ ॥

पूर्वाधिकरणे आदित्यादिस्थानभेदात् धर्माऽनुपसंहार उक्तः, अत्र तु ब्रह्मणः प्रत्यभिज्ञायमानत्वादुपसंहार इति प्रत्युदाहरणेनाक्षिप्याऽतिदेशेन समाधत्ते—

संभृतिद्युव्याप्त्यपि चाऽतः ॥ २३ ॥

'ब्रह्मज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान'ेति राणायनीयानां खिलेषु आधिदैवसंभृतिद्युव्याप्त्यादयोपि धर्मास्ते नाऽध्यात्मदहरोपकोशलादिविद्यास्वपि उपसंहर्तव्याः । कुतः ? अत एव स्थानभेदादेव ॥ २३ ॥

पूर्वाधिकरणे असाधारणप्रत्यभिज्ञानात्संभृत्यादौ विद्याभेद उक्तः, इह तु असाधारणगुणप्रत्यभिज्ञानाद्विद्यैक्यमिति प्रत्युदाहरणेनाक्षिप्य समाधत्ते—

पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥२४॥

ताण्डिनां पैङ्गिनां च रहस्ये पुरुषस्याऽऽयुस्त्रेधा विभज्य तत्सवनत्रयं परिकल्प्याऽशिषादीनि दीक्षात्वेनोच्यन्ते सेयं पुरुषविद्या, तस्यां ये धर्मा'स्तस्यैवं विदुषो यज्ञस्ये'त्यादिना ये पुरुषो यज्ञे इतरैस्तैत्तिरीयकैर्धर्माः परिकल्पितास्तस्मिंस्ते नोपसंहर्तव्याः । कुतः ? तेषां ताण्डिपैङ्गिवदनाम्नानात् । यतस्ते 'तस्ये'त्यादिना 'आत्मा यजमानः श्रद्धा पत्नी'त्यादि पठन्ति ॥ २४ ॥

पूर्वाधिकरणे पुरुषयज्ञस्य विद्यासन्निधेर्विद्याङ्गत्वात् 'सर्वं प्रविध्ये'त्यादेरुपनिषत्सन्निधेर्विद्याङ्गत्वमिति दृष्टान्तेनाक्षिप्य समाधत्ते—

## वेधाद्यर्थभेदात् ॥ २५ ॥

'सर्वं प्रविध्ये'त्यादिमन्त्रजातं प्रवर्ग्यादिर्वा कर्म वा तत्तच्छाखोपनिषदारम्भे पठ्यमानानि न विद्यासूपसंहर्तव्यानि । कुतः ? तेषां ये हृदयवेधादयो ऽर्थास्तेषां भेदात् ॥ २५ ॥

पूर्वाधिकरणे विद्यासन्निधौ श्रुतस्य मन्त्रादेर्विद्यायामर्थभेदे सामर्थ्यादनुपसंहार उक्तः, तद्धानसन्निधौ श्रुतस्याऽप्युपायनस्य तदन्तरेणापि हानसम्भवात् अनुपसंहार इत्याक्षिप्य समाधत्ते—

## हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दःस्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥

'तदा विद्वान् पुण्यपापे विधूये'त्यादौ यद्धानं तस्मिन् उपायनं नास्ति न वक्तव्यमिति तुशब्द आह । हानौ केवलायां श्रूयमाणायामथर्वणादावुपायनं सन्निपतेत् । कुतः ? उपायनशब्दशेषत्वात् तस्याः । तथा हि कौषीतकिरहस्ये 'तत्सुकृतदुष्कृते विधुनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति अप्रिया दुष्कृत'मिति । अथ वा धूञ् कम्पने इति धातोश्चलनार्थोयं विधूतशब्दः उत हानाविति 'अश्व इव रोमाणि विधूये'त्यादौ न कृतसुदुष्कृतयोश्चलनं सम्भवति, किं तु तयोर्हानिः परित्यागः । कुतः? उपायनशब्दशेषत्वात् । तच्च हानौ सत्यां कुशाच्छन्दःस्तुत्युपगानवदित्युपमानं भाल्लविनां 'कुशा वानस्पत्या' इत्यविशेषेण श्रवणात् शाट्यायनिनामौदुम्बरा इति विशेषः कुशा-

नाम्। यथा वा क्वचिद्देवाऽसुरच्छन्दसामविशेषे 'देवच्छन्दांसि पूर्वा-णी'ति पैङ्गिनामाम्नाते सूर्य इति विशेषः। यथा वा क्वचिदृत्विग् इति अविशेषादुपज्ञानात् पूर्वत्वं विशेषः। यथा च षोडशिस्तोत्रे काला-ऽनिश्चये समयाऽध्युषिते प्राप्ते भाल्लविना 'मध्वर्युरुपगाये'दिति वि-विशेषमाहुस्तद्वत् कौषीतकिरहस्यादौ उपायनस्य विशेषः। तदुक्तं द्वादशलक्षण्याम्। 'अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्या'दिति। 'एष वै सप्तदश प्रजापतिर्यज्ञमन्वा-यत्त' इति 'नाऽनुयाजेषु यजामहं करोती'ति च विधिप्रतिषेधयोः समावेशे विकल्पे प्राप्ते जैमिनिराह—अपि त्वित्यादि। तुशब्दो विकल्पं वारयति। कुतः? अन्याय्यत्वाद्विकल्पस्याऽष्टदोषग्रस्त्वेन ततो वि-धीनामेकदेशः स्यात्। अनुयाजवर्जितेषु यजामहः कर्तव्य इति पर्युदासः स्यात्। अस्मिन्नर्थे 'नाऽनुयाजेषु यजामहं करोती'ति वा-क्यशेषो ऽप्यनु कूलः स्यात्। यथा ऽत्र न विकल्पस्तद्वदुपायनेपि न विकल्पः। यद्यप्यन्यसुकृतदुष्कृतयोरन्येन नोपादानं तथापि विद्यास्तुतिरिति द्रष्टव्यम् ॥ २६ ॥

पूर्वाधिकरणे विद्यासामर्थ्यात्कर्मणां परित्याग उक्तः, नैतद्वि-द्यासामर्थ्यम् अर्द्धमार्गे परित्यागादिति इदानीमाक्षिप्य समाधत्ते—

## साम्पराये तर्तव्याऽभावात्तथा ह्यन्ये ॥२७॥

सम्पराय एव साम्परायः। तस्मिन् देहपरित्यागाऽवसरे एव सुकृतदुष्कृतयोर्हानिः, न त्वर्धमार्गे विरजां तीर्त्वा। कुतः? तर्तव्या-ऽभावात्। उत्पन्नज्ञानस्य सुकृतदुष्कृताभ्यां प्राप्तव्यस्याऽभावात्। तथा ह्यन्ये। हि यस्मात् यथा ऽस्माभिर्व्याख्यातं तथा ताण्डिनः 'अश्व इव रोमाणि विधूये'त्यादिना शाट्यायनिनश्च 'तस्य पुत्रा दा-यमुपयन्ति' इत्यादिना आदावेव परित्यागमामनन्ति ॥ २७ ॥

ननु विरजां नदीं तीर्त्वेत्यर्थतस्त्वाप्रत्ययश्रवणात् तत्रैव कुतो न परित्याग? इत्यत आह—

## छन्दत उभयाऽविरोधात् ॥ २८ ॥

छन्दत इच्छातः शरीरे सति ब्रह्मचर्यादिसाधनपरित्यागाऽव-सरे परित्यागः। एवं चोभयस्य निमित्तस्य नैमित्तिकस्य च ताण्डि-शाट्यायनिनोश्चाऽविरोधः ॥ २८ ॥

# सूचीपत्रम् ।

| | | | |
|---|---|---|---|
| गणपाठः | ० | ४ | ० |
| गोलप्रकाशः | २ | ८ | ० |
| गंगालहरी | ० | १ | ० |
| गुरुसारणी | ० | ४ | ० |
| जातकतत्त्वम् | ० | १२ | ० |
| तत्त्वदीप | ० | १ | ० |
| तर्कसंग्रहः | ० | १ | ६ |
| दत्तकमीमांसा | ० | ८ | ० |
| धर्म्मशास्त्रसंग्रहः | ० | १ | ६ |
| धातुपाठः ( शिला -)' ) | ० | २ | ० |
| धातुरूपावली | ० | २ | ६ |
| नैषध चरित नारायणी टीका टाइप | ४ | ० | ० |
| परिभाषापाठः | ० | ० | ० |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ | ० |
| प्रथम परीक्षा | ० | २ | ० |
| प्रथमपुस्तक हिन्दी | ० | १ | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ४ | ० |
| भट्टीकाव्य ५ सर्ग | ० | ६ | ० |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ९ | ० | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ४ | ० |
| लक्षणावली | ० | २ | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० | ० |
| वसिष्ठसिद्धान्तः | ० | १ | ६ |
| वार्तिकपाठः | ० | ४ | ० |
| विष्णुसहस्रनाम | ० | १ | ० |
| शब्दरूपावली | ० | १ | ६ |
| शृङ्गार सप्तशती | १ | ८ | ० |
| समासचक्रम् | ० | १ | ० |
| समासचन्द्रिका | ० | १ | ० |
| सरस्वतीकण्ठाभरणम् | ३ | ० | ० |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता | ० | ८ | ० |
| साङ्ख्यतत्त्वकौमुदी | ० | ६ | ० |
| सिद्धान्तकौमुदी | ४ | ० | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | ३ | ० | ० |
| उपसर्गवृत्ति | ० | १ | ० |

## बनारससंस्कृतसीरीज़नाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदेकैकस्य खण्डस्य ।॥।) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्महाशयैर्यैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां १) मूल्यं प्रापणव्ययश्च =) देय इति ॥

| तत्र मुद्रिता ग्रन्थाः । | रु० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रहः अंग्रेजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं ख० ६ | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ३ | ३ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ४ | ४ | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यम् | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| (बृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | ० |
| विवरणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |
| तत्त्वदीपनम् ( पञ्चपादिकाविवरणस्य व्याख्यानम् ) ख० ८ | ८ | ० |
| वेदान्तदीपः (श्रीभगवद्रामानुजाचार्यविरचितः) खण्डानि ३ | ३ | ० |
| टुप्टीका खण्डानि ४ | ४ | ० |
| पातञ्जलदर्शनम्।श्रीरामानन्दयतिकृतमणिप्रभाऽऽख्यवृत्ति स० | १ | ० |
| व्याकरणमिताक्षरा । श्रीमदन्नंभट्टप्रणीता खण्डानि० ४ | ४ | ० |
| रसमञ्जरी । व्यङ्ग्यार्थकौमुद्या प्रकाशेन च सहिता ख० ३ | ३ | ० |
| भेदधिक्कारः व्याख्यासहितः | १ | ० |
| बोधसारो नरहरिकृतः तच्छिष्यदिवाकरकृतटीकया स० ख० २ | २ | ० |
| ब्रह्मसूत्रदीपिका श्रीमच्छङ्करानन्दभगवद्भिरचिता । | १ | ० |
| न्यायलीलावती ( यन्त्रस्था ) | ० | ० |

**ब्रजभूषण दास और कम्पनी**

चांदनीचौक के उत्तर नई सड़कबनारस ।

# BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH, M. A., C. I. E.

AND

G. THIBAUT, PH. D.

*No. 112.*

# ब्रह्मसूत्रदीपिका

श्रीमच्छङ्करानन्दभगवद्भिरचिता ।

तथा—

## तत्त्वानुसन्धानं नाम वेदान्तप्रकरणम्

प. प. श्रीमन्महादेवानन्दसरस्वतीरचितम् ।

BRAHMASÛTRADÎPIKÂ

BY ŜRÎ ŜANKARÂNANDA,

And TATTVANUSANDHÂNA

BY ŜRÎ MAHÂDEVÂNANDASARASWATÎ,

EDITED BY

Râma Ŝâstrî Tailanga,

PROFESSOR, GOVT. SANSKRIT COLLEGE, BENARES.

*Fasciculus II.*

BENARES:

*Published by the Proprietors Messrs. Braj B. Das & Co.,*

AND SOLD BY H. D. GUPTA,

*Secretary, Chowkhamba Sanskrit Book Depôt.*

Printed at the Vidyâ Vilâs Press & Tara Printing Workc,

BENARES.

1906.

# सूचीपत्रम् ।

| | | | |
|---|---|---|---|
| गणपाठः | ० | ४ | ० |
| गोलप्रकाशः | २ | ८ | ० |
| गंगालहरी | ० | १ | ० |
| गुरसारणी | ० | ४ | ० |
| जातकतत्त्वम् | ० | १२ | ० |
| तत्त्वदीप | ० | १ | ० |
| तर्कसंग्रहः | ० | १ | ६ |
| दत्तकमीमांसा | ० | ८ | ० |
| धर्म्मशास्त्रसंग्रहः | ० | १ | ६ |
| धातुपाठः ( शिला -) ) | ० | २ | ० |
| धातुरूपावली | ० | २ | ० |
| नैषध चरित नारायणी टीका टाइप | ४ | ० | ० |
| परिभाषापाठः | ० | १ | ० |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ | ० |
| प्रथम परीक्षा | ० | २ | ० |
| प्रथमपुस्तक हिन्दी | ० | १ | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ८ | ० |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ९ | ० | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ४ | ० |
| लघुकौमुदीभाषाटीका | ४ | ० | ० |
| लक्षणावली | ० | २ | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० | ० |
| वसिष्ठसिद्धान्तः | ० | १ | ६ |
| विष्णु सहस्रनाम | ० | १ | ० |
| शब्दरूपावली | ० | १ | ६ |
| शृङ्गार सप्तशती | १ | ८ | ० |
| समासचक्रम् | ० | १ | ० |
| समासचन्द्रिका | ० | १ | ० |
| सरस्वतीकण्ठाभरणम् | ३ | ० | ० |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता | ० | ८ | ० |
| साङ्ख्यतत्त्वकौमुदी | ० | ६ | ० |
| सिद्धान्तकौमुदी | ३ | ० | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | ३ | ० | ० |
| उपसर्गवृत्ति | ० | १ | ० |
| क्षेत्रकौमुदी | ० | ६ | ० |
| क्षेत्रसंहिता | २ | ० | ० |

पूर्वाधिकरणे शरीरपरित्यागाऽवसरे एव सुकृतदुष्कृतयोः परित्यागो निमित्तनैमित्तिकाऽविरोधेनेत्युक्तम्, अत्रापि सगुणनिर्गुणब्रह्मप्रतिपादकवाक्यानां ब्रह्मप्रतिपादकत्वाऽविरोधेन निर्गुणेष्वपि गतेरुपसंहार इति दृष्टान्तेनाक्षिप्य समाधत्ते—

**गतेरर्थवत्त्वमुभयथा ऽन्यथा हि विरोधः॥२९॥**

गतेर्देवयानस्य पथो ऽर्थवत्त्वं प्रयोजनवत्त्वम् उभयथा सगुणे निर्गुणे च व्यवस्थया । कुतः ? हि यस्मात् अन्यथा निर्गुणे ऽपि चेद् गतिः 'पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती'त्यादिना विरोधः स्यात् ॥ २९ ॥

किमिदानीं श्रुतिविरोधादनुपपन्नमप्याहर्तव्य?मित्यत आह—

**उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥**

उपपन्नो ऽयं गतेरुभयथाभावः । कुतः ? तल्लक्षणाऽर्थोपलब्धेः । तस्य गतेर्लक्षणभूतः कारणभूतो यो ऽर्थः प्रयोजनं पर्यङ्काऽऽरोहणादि पर्यङ्कविद्यादौ सगुणे उपलभ्यते न तु निर्गुणे । तत्र निदर्शनं लोकवत् । यथा ग्रामादिप्राप्तौ मार्गस्याऽर्थवत्त्वं तद्वत् ॥ ३० ॥

पूर्वाधिकरणे सगुणनिर्गुणविद्यासु व्यवस्था गतेरुक्ता, एवं सगुणास्वपि गतेर्व्यवस्था स्यादिति दृष्टान्तेनाक्षिप्याऽपवदति—

**अनियमः सर्वेषामविरोधः शब्दाऽनुमानाभ्याम् ॥ ३१ ॥**

सर्वेषां सगुणानामुपश्रुतगतानीमपि गतेरनियमो ऽविशेषः । प्रकरणस्य नियामकस्य विरोधे कुतो ऽनियम ? इत्यत आह—अविरोधः । न विरोधः प्रकरणे । कुतः ? शब्दाऽनुमानाभ्याम् । शब्दः श्रुति'र्ये चेमे ऽरण्ये श्रद्धां तप इत्युपासते' इत्यविशेषेण गतिमाह । अनुमानं स्मृतिः 'शुक्लकृष्णे गती ह्येते जगत' इत्यादिका ॥ ३१ ॥

पूर्वाधिकरणे सगुणविद्यासु गतिः सर्वत्रोक्ता, ततः पूर्वं निर्गुणासु नेत्युक्तं, सो ऽयं नियमो ऽनुपपन्नो, ज्ञानिनामपि व्यासादीनां शरीरैश्वर्यादिदर्शनात्ततो न निर्गुणज्ञानेन विदेहकैवल्यं सगुणेन क्रममुक्तिरित्याक्षिप्य समाधत्ते—

## यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३२ ॥

आधिकारिणां परमेश्वरनियमे वर्तमानानां व्यासादीनामारब्धफलेन कर्मणा कल्पभागेनाऽवस्थितिरवस्थानं न तु ब्रह्मज्ञानस्य पाक्षिकफलत्वेनाऽफलत्वेन वा। तर्हि कियन्तं काल?मित्यत आह–यावदऽधिकारम्। अधिकारकर्म यावत् तावदेव, न तूपरिष्टात् ॥ ३२ ॥

पूर्वाधिकरणे आधिकारिकाणां प्रारब्धकर्मण एव शरीरान्तरसम्भवात् न कर्मान्तरस्य निमित्ततेत्युक्तम्, एवमिहापि तत्प्रकरणपठितनिषेधत एवोपलक्षणतया सर्वत्र प्रपञ्चनिषेधे सिद्धे न शाखान्तरीयनिषेधानां शाखान्तरे ब्रह्मप्रमितिदृष्टान्तेन उपसंहार इत्याक्षिप्य समाधत्ते—

## अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३२ ॥

अक्षरधियामस्थूलत्वादिबुद्धीनां चाऽन्यत्राऽवरोधः स्वीकारः स्यात्। कुतः? विशेषधर्मनिराकरणस्य सामान्यं, तस्य ब्रह्मणः प्रतिपाद्यस्य एकस्य भावः सत्त्वं च सर्वत्र ताभ्याम्। औपसदवदिति निदर्शनम्। यथा जामदग्न्ये अहीने पुरोडाशिनीषूपसत्सु चोदितासु पुरोडाशप्रदानमन्त्राणा'मग्नेर्वेहोत्रं वेरध्वर'मित्यादीनामुद्गातृवेदोत्पन्नानामध्वर्युभिः सम्बन्धो भवति अध्वर्युकर्तृकत्वात् पुरोडाशप्रदानस्य प्रधानतन्त्रत्वाच्चाऽङ्गाना,मेवमिहाप्यक्षरतन्त्रत्वात् तत्तद्विशेषणानां यत्र क चिदुत्पन्नानामक्षरेण सर्वत्राऽभिसम्बन्ध इत्यर्थः। तदुक्तं प्रथमे काण्डे 'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोग' इत्यत्र शावरमुदाहरणं वारवन्तीयादिसाम्नां यजुर्वेदविनियोगस्य श्रवणात् 'उच्चैः साम्ने'त्युत्पत्तिविधेर्गुणत्वा'दुपांशु यजुषे'ति विनियोगविधेर्मुख्यत्वात्तयोर्व्यतिक्रमे विरोधस्य तदर्थत्वात् विनियोगविध्यर्थत्वादुत्पत्तिविधेर्मुख्येन यजुष उपांशुस्वरेण वेदस्य च वारवन्तीयादिसाम्नः संयोग इत्यत्र सम्बन्ध इति योज्यम्। पूर्वं शावरमुदाहरण,मतिरोहितं तु तत् ॥ ३३ ॥

पूर्वाधिकरणे प्रतिपाद्यब्रह्मैक्यप्रत्यभिज्ञानात् विद्यैक्ये ऽक्षरधि-

यामुपसंहार उक्तः, इह प्रतिपाद्यभेदाद्विद्याभेद इति प्रत्युदाहरणेनाक्षिप्य समाधत्ते—

## इयदामननात् ॥ ३४ ॥

'द्वा सुपर्णे'त्यत्र 'ऋतं पिबन्ता'वित्यत्र च विद्याया ऐक्यम्। कुतः? इयत्तापरिच्छिन्नस्य द्वित्वसंख्योपदेशस्योभयत्रामननात्॥३४॥

पूर्वाधिकरणं 'पिबन्ता'वित्यस्य लाक्षणिकत्वमुपपाद्य मन्त्रद्वयेपि भोक्तृपरत्वेनार्थैक्यात् विद्यैक्यमुक्तम्, इहाऽर्थैक्येपि न विद्यैक्यमिति रूपाऽभेदमभ्यासेन प्रत्युदाहरणेनाक्षिप्य समाधत्ते—

## अन्तरा भूतग्रामवत्स्वात्मनः ॥ ३५ ॥

उषस्तिकहोडब्राह्मणयोर्विद्यैकत्वम्। कुतः? आत्मनोऽन्तरा सर्वान्तरत्वेनोभयत्र पाठादिति शेषः। भूतग्रामवदिति निदर्शनं व्यतिरेके। यथा भूतग्रामस्य पृथिव्यादेर्न सर्वान्तरत्वं तद्वदात्मन आत्मान्ते सर्वान्तरत्वं न स्यादेकस्याऽन्वये तु यथा 'एको देव' इत्यादौ सर्वान्तरत्वमेकस्य तद्वत् ॥ ३५ ॥

## अन्यथा भेदाऽनुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३६ ॥

अन्यथा विद्यैकत्वे आत्मना भेदाऽनुपपत्तिरिति चेत्तन्न। यथा ताण्डिनां 'तत्त्वमसी'ति नवकृत्व उपदेशभेदो विद्यैक्ये तद्वदत्रापि स्यात् ॥ ३६ ॥

पूर्वाधिकरणे अभ्यास आदरार्थ उक्तः, उत्तरत्रापि तथेत्याक्षिप्य समाधत्ते—

## व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥

'तद्योऽहं सोऽसौ योऽसौ सोऽह'मित्यादावीश्वरबुद्धिवदीश्वरे स्वात्मबुद्धिरिति व्यतिहारेण बुद्धिद्वयं करणीयम्। अनेकबुद्धिकरणे निदर्शनमितरवत्। यथा सर्वात्मादिबुद्धिः क्रियते तद्वत्। कुतः? हि यस्मात् 'त्वं वा ऽहमस्मि अहं वै त्वमसी'ति विशेषयन्त्याम्नातारः ॥ ३७ ॥

पूर्वाधिकरणे जीवब्रह्मणोरितरेतरात्मत्वं निर्देशभेदात् द्विरूपा मतिः कर्तव्येत्युक्त,मेवमिहापि 'जयतीमांल्लोका'निति 'हन्ति पाप्मान'-मिति च फलभेदनिर्देशाद्विद्याभेद इति दृष्टान्तेनाक्षिप्य समाधत्ते—

## सैव हि सत्यादयः ॥ ३८ ॥

'स यो हैतं महद्यक्ष'मित्यादिना 'तद्यत्तत्सत्यमसौ स आदित्य' इत्यादिना 'यश्चायं दक्षिणेक्षन्पुरुष' इत्यादिना च योक्ता सा एकैव। हि यस्मात् 'तत्सत्य'मिति प्रकृताकर्षणादयः सत्यादयः सर्वे गुणा उभयत्रोपसंहर्तव्याः ॥ ३८ ॥

पूर्वाधिकरणे 'तत्सत्य'मिति प्रकृताकर्षणेन रूपाऽभेदात् गुणोपसंहार उक्तः, इह तु रूपाऽभेदाद् गुणाऽनुपसंहार इति प्रत्युदाहरणेनाक्षिप्य समाधत्ते—

## कामादीतरत्र तत्र चाऽऽयतनादिभ्यः ॥ ३९ ॥

कामादि सत्यकामादि दहरविद्यायां श्रूयमाणमितरत्र 'यो ऽयं विज्ञानमय' इत्यादिबृहदारण्यकोक्ते उपसंहर्तव्यं, तत्र च यद्वशित्वादिकं तदपि छान्दोग्योक्ते दहरे उपसंहर्तव्यम्। कुतः? आयतनादिभ्यः ॥ ३९ ॥

पूर्वाधिकरणे उपासनीयेपि स्तुत्यर्थत्वेन गुणाऽलोप इत्युक्तं, तद्वदिहापि प्राणाऽग्निहोत्रस्य—

## आदरादलोपः ॥ ४० ॥

न लोपः, 'पूर्वोऽतिथिभ्यो ऽश्नीया'दित्यादेर्जाबालानामादरादिति पूर्वपक्षः ॥ ४० ॥

राद्धान्तमाह—

## उपस्थिते ऽतद्वचनात् ॥ ४१ ॥

'तद्यद्भक्तं प्रथममागच्छे'दित्यत्र भोजने सति भक्तेन प्राणाऽऽहुतीनां विधानात् भोजनाऽलोपे ऽपि प्रत्यगागतमुपस्थितं यद्भक्तं द्रव्यम् अतो ऽस्माद्भक्तद्रव्यात् प्राणाऽग्निहोत्रस्य निष्पत्तिः, न त्व-

न्यस्मात्कस्माच्चित्, 'नद्यञ्चक्र'मित्यनेन तस्याऽग्निहोत्रद्रव्यवचनत्वात् । अतो भोजनलोपे ऽपि न लोपो ऽग्निहोत्रस्य ॥ ४१ ॥

पूर्वाधिकरणे नित्यभोजनाश्रितप्राणाऽग्निहोत्रस्य नित्यत्वमुक्त,मेवं च नित्याऽङ्गाऽवबद्धोपासनानां नित्यत्वमिति दृष्टान्तेनाक्षिप्य समाधत्ते—

## तन्निर्धारणाऽनियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४२ ॥

तेषां कर्मगुणयाथात्म्यनिर्धारणानामुद्गीथरसतमत्वादीनां न नित्यवन्नियमः । न सर्वदा कर्मण्यनुष्ठीयमाने ऽनुष्ठानम् । कुतः ? तद्दृष्टेः । तस्याऽनियमस्य 'तेनोभौ कुरुत' इत्यादिदृष्टेरवगमात् । ननूभयोः करणे किमयमेव हेतुरित्यत आह–हि यस्मात् पृथक् फलम् अप्रतिबन्धः अतिशयः 'यदेव विद्यया करोती'त्यादिना श्रूयते, अतः फलभूमाऽर्थिन उपासनानि गोदोहनादिवत्—

पूर्वाधिकरणे फलभेदात् कर्माऽङ्गानां नित्याऽनित्यादिनिरूपणेन प्रयोगप्रभेद उक्तः, इह तु वायुप्राणयोस्तत्त्वाऽभेदात्प्राप्तिलक्षणफलैक्यात् उपासनप्रयोगैक्यमिति प्रत्युदाहरणेनाक्षिप्य समाधत्ते—

## प्रदानवदेव तदुक्तम् ॥ ४३ ॥

वाजसनेयके 'वदिष्याम्येवाऽह'मित्यादिना वागादिभ्यः प्राणो ऽधिको ऽवधारितो 'ऽध्यात्ममाधिदैवं च ज्वलिष्याम्येवाह'मित्यग्न्यादिभ्यो वायुः, एवं छान्दोग्येपि संवर्गविद्यायां वायुप्राणाववधारितौ विद्याया ऐक्यमपि, तत्रैतौ वायुप्राणौ भिन्नस्वरूपौ न तु विद्याभेदौ यथैकस्मिन्नग्निहोत्रे सायंप्रातः प्रवृत्तिभेद इत्येतस्मिन्नर्थे निदर्शनं प्रदानवत् । यथा त्रिपुरोडाशिन्यामिष्टौ 'इन्द्राय राज्ञे इन्द्रायाऽधिराजाय इन्द्राय स्वाराज्ञे' इत्यत्र राजादिरूपभेदात् पृथक् प्रदानं तद्वद्वायुप्राणयोरपि भेदः । तदुक्तं पूर्वमीमांसायां 'सङ्कर्षो ऽनन्ता वा देवता पृथग्ज्ञानात्' । सङ्कर्षः सर्वेषामभिगमयन्नवद्यतीत्यस्मादेकहेलया परित्यागः प्राप्तस्तं परित्यागं वाशब्दो वारयति । पृथग्ज्ञानात् राजादिगुणानाम् ॥ ४३ ॥

पूर्वाधिकरणे एकप्रयोगसम्भवाद्वायुप्राणौ भेदेन ज्ञेयावित्युक्त,-मिह तु मनश्चिदादीनां कर्माङ्गत्वं नैकप्रयोगाऽङ्गत्वमिति प्रत्युहाहरणेनाक्षिप्य समाधत्ते—

## लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४४ ॥

वाजसनेयके ऽग्निरहस्ये मनो ऽधिकृत्य 'षट्त्रिंशत्सहस्राण्यपश्यदात्मनो ऽग्नीनिमान्मनोमयान्मनश्चित' इत्यादिना आम्नाता अग्नयः स्वतन्त्रा न क्रियाऽनुप्रवेशिनः । कुतः ? 'तद्यत्किं चे'त्यादेर्लिङ्गस्य भूयस्त्वादधिकत्वात् । सन्ति लिङ्गानि तथाप्यग्नेः प्रकरणात् कर्मोऽनुप्रवेशिन इत्यत आह—तद्धि बलीयः । हि यस्मात् लिङ्गं प्रकरणाद् बलीयः । तदप्युक्तं पूर्वस्मिन्काण्डे 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षा'दिति । एकद्वित्रिचतुःपञ्चक्षणविलम्बात् परस्य परस्य दौर्बल्यं पूर्वस्य प्राबल्यमिति ॥ ४४ ॥

आक्षिपति पूर्ववादी पूर्वाधिकरणे—

## पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत् ॥ ४५ ॥

मनश्चिदादयः क्रियैव स्यात् कथं ? पूर्वस्मिन् क्रियामये ऽग्नौ विकल्पः सङ्कल्पविशेषो ऽभिधीयते यतः । तदपि कुतः ? क्रियामयस्याऽग्नेः प्रकरणात् । विरूपस्य तत्प्रकरणात् क्रियारूपत्वं क दृष्टमित्यत आह—मानसवत् । यथा दशरात्रस्य दशमे ऽहन्यविवाक्ये पृथिव्याः पात्रे समुद्रस्य सोमस्य प्रजापतिदेवतायै गृह्यमाणस्य ग्रहणाऽऽसादनहरणोपह्वानभक्षणानि मानसान्येवाऽऽम्नायन्ते, स च मानसो ऽपि ग्रहविकल्पः क्रियाप्रकरणात्क्रियाशेषः एवमप्यग्निविकल्प इत्यर्थः ॥ ४५ ॥

केवलप्रकरणं कथं लिङ्गं बाधते? इत्यत आह—

## अतिदेशाच्च ॥ ४६ ॥

'तेषामेकैक एतावान् यावानसौ पूर्व' इत्यतिदेशस्तस्मादपि॥४६॥

परिहरति सिद्धान्ती—

## विद्यैव तु निर्द्धारणात् ॥४७॥

तुशब्दोऽग्नीनां क्रियारूपत्वं वारयति। किं तर्हि? विद्यैव। कुतः? विद्या चित एवेति निर्धारणात् ॥ ४७ ॥

नन्वसहकृतं निर्धारणं न बाधकं प्रकरणस्येत्यत आह—

## दर्शनाच्च ॥ ४८ ॥

लिङ्गानामिति शेषः। चकारः सहकारिणोऽपेक्षामप्याह। लिङ्गानि चोक्तानि लिङ्गसूत्रे ॥ ५८ ॥

लिङ्गमपि क्वचिद्बाधकं न प्रकरणस्येत्यत आह—

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥४९॥

न बाधः प्रकरणेन लिङ्गबाधात् स्वातन्त्र्यं मनश्चिदादीनाम्। कुतः? श्रुत्यादीनां बलीयस्त्वात्। सन्ति चाऽत्र तानि। श्रुतिस्ताव'द्विद्याचित'एवेति। लिङ्गं 'सर्वदा सर्वमायानि भूतानि'। वाक्यं तु 'विद्याया हैवैते'। एवंविधाश्चितो भवन्ति ॥ ३९ ॥

ननु त्वयापि प्रसिद्धेनाऽग्निनाऽतिदेशात्क्रियाऽनुप्रवेशिनस्ते इत्यत आह—

## अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम् ॥ ५० ॥

अनुबध्यन्तएव तेषु मनश्चिदादिषु क्रियाऽवयवा आधानादयः 'मनसैवाऽधीयन्ते', इत्यादिनोक्ता येन सोऽय मनुबन्धः, आधानादिसंपादनमिति यावत्। आदिशब्देनाऽतिदेशादयः। न हि क्रियाऽनुप्रवेशिष्वग्निषु इदं समञ्जसम्। तेभ्य एते स्वतन्त्राः। प्रज्ञान्तरपृथक्त्ववदिति निदर्शनम्। यथा प्रज्ञान्तराणां शाण्डिल्यादिविद्यानां परस्परं कर्मभ्यश्च पृथक्त्वं तद्वत्। ननु प्रकरणादुत्कर्षो ऽदृष्टचरः कथमिव स्वीकरणीय? इत्यत आह-दृष्टश्च। अवेष्टेः राजसूयप्रकरणपठितायाः प्रकरणादुत्कर्षः। वर्णत्रयाऽनुबन्धात्तस्या राजसूयवत्त्वाच्च

राजसूयत्वम्। तदुक्तं प्रथमे काण्डे 'क्रत्वर्थैयमिति चेन्न वर्णसंयोगा'-दिति। 'आग्नेयो ऽष्टाकपालो हिरण्यं दक्षिणा' इत्याद्यवेष्टिः क्रतोः राजसूयस्य प्रकरणे पठिता, अतस्तदर्थैयमिति चेन्न। कुतः? 'यदि वा ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाऽऽहुतीनामाहुतीर्हुत्वा तमभिघारयेद्यदि वैश्यो वैश्वदेवं, यदि राजन्य ऐन्द्र'मिति वर्णैः सह संयोगः सम्बन्धः। न च राजसूयस्य 'राजा स्वाराज्यकामो राजसूयेन यजेते'ति श्रुतेः। तस्मात्तस्य राजसूयप्रकरणादुत्कर्षः॥५०॥

ननु मानसवत्क्रियाङ्गं भविष्यतीत्युक्तमित्यत आह—

न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः॥ ५१ ॥

न सामान्यादपि क्रियाङ्गत्वं मनश्चिदादीनाम्। कुतः? केनाप्यंशेन कस्य चित्सामान्यस्योपलब्धेरित्यत आह—मृत्युवत्। 'स च एष मृत्यु'रित्यादित्यपुरुषस्या'ऽग्निर्वै मृत्यु'रित्यग्नेर्मृत्युत्वं च तयोरैक्यं तद्वत्। हि यस्मा'दसौ वै लोको ऽग्नि'रिति लोकस्याऽग्निभावाऽऽपत्तिस्तद्वत्। अत्यन्तवैलक्षण्ये लोकदृष्टान्तः॥ ५१॥

ननु 'श्रद्धां जुहोति' इति परेण लोकस्याऽग्नित्वं प्रतीयते, न चाऽन्यत्र तादृग्वाक्यमित्यत आह—

परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः॥ ५२ ॥

परेण 'चाऽयं वाव लोक एषोऽग्नि श्चि'दित्यस्मिन्नुत्तरे ब्राह्मणे ताद्विध्यं केवलविद्याविधित्वं शब्दस्य प्रयोजनं लक्ष्यते न शुद्धं कर्माऽङ्गविधित्वम्। यत आह 'विद्यया तदारोहन्ती'त्यादि। तथा पुरस्तादपि 'यदेतन्मण्डल' मित्युपक्रम्याऽऽह 'सो ऽमृतो भवती'त्यादि। तत्सामान्यादिहापि तत्त्वम्। नन्वनुबन्धः कथं तर्हीत्यत आह-भूयस्त्वात्त्वनुबन्धः। तुकारः कर्माङ्गतां व्यावर्तयति॥ ५२॥

आधानादीनामप्यग्न्यवयवानां संपाद्यानां भूयस्त्वाद्बहुत्वादनुकरणे मनश्चिदादीना पुरुषार्थत्वमुक्तं, सम्प्रति पुरुषस्यैवाऽभावादित्याक्षिपति—

## एकआत्मनः शरीरे भावात् ॥ ५३ ॥

एके लौकायतिका देहव्यतिरिक्तस्यात्मनोऽसत्त्वमाहुः । ज्ञानादीनामात्मधर्मत्वेनाऽभिमतानां शरीरे सति भावात् असति चाऽभावात् शरीरस्यैव ज्ञानादयो धर्माः ॥ ५३ ॥

सिद्धान्तमाह—

## व्यतिरेकस्तद्भावाऽभावित्वान्न तूपलब्धिवत् ॥ ५४ ॥

देहाऽऽत्मनोर्व्यतिरेकः । कुतः ? तद्भावाऽभावित्वात् । तस्य देहस्य भावे ऽपि ज्ञानचेष्टादीनामभावित्वादसत्त्वात् । अतस्ते न देहधर्माः । तत्र निदर्शनमुपलब्धिवत् । यथा भूतभौतिकानामनुभवनमुपलब्धिर्विषयत्वेन न विषयधर्मो बलादापतति तद्वत् प्राणचेष्टादयो ऽपि न देहधर्माः ॥ ५४ ॥

पूर्वाधिकरणे शरीरात्मनोर्भेदादात्मधर्माणामसम्भवः शरीरइत्युक्तम्, एवमेकशाखागतोद्गीथधर्माणां प्राणादिदृष्टीनां न हि शाखान्तरीयोद्गीथादिषु प्राप्तिरिति दृष्टान्तेनाक्षिप्य समाधत्ते—

## अङ्गाऽवबद्धास्तु न शाखासु हि प्रतिवेदम्॥५५॥

'ओमित्येतदक्षरं लोकेषु पञ्चविधं'मित्येवमाद्याः प्रतिवेदमुपासना न शाखास्वेव । उद्गीथादिश्रुत्यविशेषात् । तुशब्दो व्यवस्थानियमभेदार्थः ॥ ५५ ॥

नन्वन्यवेदपठितानां कथमन्यत्र परिग्रह ? इत्यत आह—

## मन्त्रादिवद्वा ऽविरोधः ॥ ५६ ॥

वाशब्दः शङ्कानिराकरणार्थः । यथा 'कुरुरसी'ति येषां मन्त्रो न पठितस्तेषामपि तेन मन्त्रेणाऽश्मादानमेवमेवाऽग्नेरित्येवमादिमन्त्राणां यज्ञस्य दानम् । आदिशब्देन प्रयाजादीनां ग्रहणं तद्वत् शाखान्तरीयाणामप्युद्गीथादिधर्माणां ग्रहणे ऽविरोधः ॥ ५६ ॥

पूर्वाधिकरणे उद्गीथादिश्रुत्या सन्निधिं बाधित्वा उद्गीथाद्युपासनानां सर्वशाखासूपयोग उक्तः, एवमन्यत्र व्यस्तोपासनस्य विधिश्रुतेः

फलश्रुतेश्च समस्तोपासनस्य संनिधानात् प्राप्तं श्रुत्यर्थत्वं बाधित्वा विधेयमिति दृष्टान्तेनाक्षिप्य समाधत्ते—

भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५७ ॥

भूम्नः प्राचीनशालादिभिरुपास्यस्य समस्तवैश्वानरस्य ज्यायस्त्वं विवक्षितम् । क्रतुवदिति निदर्शनम् । यथा क्रतोर्दर्शपूर्णमासादेः साङ्गस्याऽनुष्ठेयत्वम् । तथा हि दर्शयति । हि यस्मात् यथोक्तमस्माभिस्तथा श्रुतिर्दर्शयति 'मूर्धा त्वेष' इत्यादि ॥ ५६ ॥

पूर्वाधिकरणे सत्यामपि सुतेजस्त्वादिगुणविशिष्टद्युलोकादिवैश्वानरोपासनानां फलभेदश्रुतावुपास्यैक्यमुक्तं तद्वदन्यासामपि ब्रह्मोपासनानामैक्यं स्यादिति दृष्टान्तेनाक्षिप्य समाधत्ते—

नाना शब्दादिभेदात् ॥ ५८ ॥

शाण्डिल्यदहरोपकोशलादिविद्या नाना भिन्ना एव । कुतः ? शब्दादिभेदात् । 'वेदोपासीते'त्यादिशब्दः । आदिशब्देन रूपाऽऽख्यादिभेदस्तस्मात् ॥ ५८ ॥

पूर्वाधिकरणे शब्दान्तरादिप्रमाणादुपास्तीनां भेद उक्त,स्तद्वदिहापि विकल्पसमुच्चयनियमयोः प्रमाणाऽभावात् याथाकाम्यमिति प्रत्युदाहरणेनाक्षिप्य समाधत्ते—

विकल्पोऽविशिष्टफलत्वात् ॥ ५९ ॥

साक्षात्कारफलहेतुभूतानां विद्यानां विकल्पः । कुतः ? अविशिष्टफलत्वात् । एकस्य साक्षात्कारफलस्य प्रत्येकं तासां दर्शितत्वात् एकस्मिन् कृते ऽन्यस्य वैयर्थ्यमिति भावः ॥ ५६ ॥

पूर्वाधिकरणे ऽहंग्रहोपासनानामुपास्यसाक्षात्कारपर्यन्तत्वात् विकल्पनियम इत्युक्तम् । तद्वत् प्रतीकोपासनानामपि तस्याऽऽर्थत्वाद् विकल्प इति दृष्टान्तेनाक्षिप्य समाधत्ते—

काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ६० ॥

तुशब्दः काम्यानां विकल्पं व्यावर्तयति। काम्या विद्या यथाकामं काममनतिक्रम्य वर्तनमेव कामाऽनतिक्रममिह समुच्चीयेरन्न वेति तासां समुच्चयो विकल्पो वा इच्छया न पूर्वहेत्वभावात्। पूर्वहेतोः फलैक्यस्य कामस्याऽभावात्। अतः फलभूमार्थिसमुच्चयो नाऽन्यस्य ताश्च 'स य एतमेव वायु'मित्याद्याः ॥ ६० ॥

पूर्वाधिकरणे प्रतीकोपासनानां भिन्नफलत्वाद्यथाकामत्वमुक्तं, फलप्राप्त्यङ्गाश्रितोपासनेषु समुच्चयाऽनियमेन फलभेदस्याऽनैकान्तिकत्वादित्याक्षिपति—

## अङ्गेषु यथाश्रयभावः ॥ ६१ ॥

कर्माऽङ्गेषु उद्गीथादिषु यथाश्रयभावः। यथैषामाश्रयाः स्तोत्रादयः संभूय भवन्ति एवं प्रत्यया अपि ॥ ३१ ॥

## शिष्टेश्च ॥ ६२ ॥

यथा चाऽऽश्रयाः स्तोत्रादयः त्रिषु वेदेषु शिष्यन्ते एवमाश्रिता अपि प्रत्ययाः ॥ ६२ ॥

## समाहारात् ॥ ६३ ॥

'होतुः सदनाद्धैवापि दु(?)रुद्गीथमनुसमाहरती'ति हौत्रात्कर्मण उद्गातुः स्वकर्मणस्तस्य समाहारः समाधानं तस्माल्लिङ्गात् समुच्चयः ॥६३॥

## गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥

विद्यागुणं च विद्याश्रयं सन्तमोङ्कारं वेदत्रयसाधारणं श्रावयति 'तेनेयं त्रयी'त्यादिना। अथ वा कर्मगुणानामुद्गीथादीनां सर्वप्रयोगसाधारण्यश्रुतेरपि तदाश्रितानां समुच्चयः ॥ ६४ ॥

समाधत्ते—

## न वा तत्सहभावाऽश्रुतेः ॥ ६५ ॥

न वेति समुच्चयनियमव्यावर्तनम्। कुतः ? तत्सहभावाऽश्रुतेः। तासामुपासनानां सहभावस्य समुच्चयस्याऽश्रुतेरश्रवणात् ॥ ६५ ॥

नन्वसमुच्चयोऽपि न श्रूयते इत्यत आह—

## दर्शनाच्च ॥ ६६ ॥

दर्शयत्यपि श्रुतिरसहभाव'मेवं विद्ध वै ब्रह्मे'त्यादिना ॥ ६६ ॥

इति श्रीब्रह्मसूत्रदीपिकायां तृतीया-
ऽध्यायस्य तृतीयः पादः ॥

—०***०—

एवं तावत्पूर्वपादे पराऽपरब्रह्मविद्यानां गुणोपसंहारनिरूपणेन परिमाणमवधारितम्, इदानीं तासां कर्मनिरपेक्षाणामेव पुरुषार्थसाधनत्वं निरूप्यते । तत्र ब्रह्मविद्यायाः केवलायाः पुरुषार्थत्वमाह—

## पुरुषार्थोऽतः शब्दादिति बादरायणः ॥१॥

अतो वेदान्तविहितात् ज्ञानात् पुरुषार्थो भवतीति बादरायण आचार्यो मन्यते। कुतः? शब्दात् । 'तरति शोकमात्मवि'दिति श्रुतेः ॥१॥

## शेषत्वात्पुषार्थवादो यथान्येष्विति जैमिनिः॥२॥

कर्तृत्वेनात्मनः कर्मशेषत्वात् तद्विज्ञाने कर्माणि चारयति विद्यास्तुतये । कर्माऽनुज्ञानमेतत् व्रीहिप्रोक्षणादिवद्विषयद्वारेण कर्मसम्बध एवेति एतस्मिन्नवगतप्रयोजने या फलश्रुतिः सा ऽर्थवाद इति जैमिनिराचार्यो मन्यते ॥ २ ॥

यथा ऽन्येषु द्रव्यसंस्कारकर्मसु 'यस्य पर्णमयी'त्यादिषु फलश्रुतिरर्थवादस्तद्वत् आत्मविज्ञानस्य कर्माङ्गत्वे न लिङ्ग मित्यत आह—

## आचारदर्शनात् ॥ ३ ॥

आचारो जनकादीनां ब्रह्मविदां 'जनको ह'त्यादिना तस्य दर्शनात् ॥ ३ ॥

नन्वयमाचारः श्रुतेरभावे ऽप्रयोजक इत्यत आह—

## तच्छ्रुतेः ॥ ४ ॥

तस्या विद्यायाः कर्माङ्गत्वं 'यदेव विद्यये'त्यादिश्रुतेः ॥ ४ ॥

कर्मफले विद्याजन्याऽतिशयाऽभावे न फलोपकार्यङ्गमित्यत आह—

समन्वारम्भणात् ॥ ५ ॥

'तं विद्याकर्मणी समन्वारभेते' इत्यस्मात् ॥ ५ ॥

तथापि कर्मसु प्रवृत्तस्य नाऽऽत्मज्ञानाऽवसर इत्यत आह—

तद्वतो विधानात् ॥ ६ ॥

तद्वतो ज्ञानवत 'एककुटुम्ब' इत्यादिना विधानात् ॥ ६ ॥

तथापि कर्मणां पाक्षिकत्वान्न नित्यवदेव ज्ञानाऽङ्गत्वमित्यत आह—

नियमाच्च ॥ ७ ॥

'कुर्वन्नेवे'त्यादि । चकारो नियमाऽभावेऽपि ज्ञानस्याऽपुरुषार्थत्वमाह ॥ ७ ॥

सूत्रोक्तं राद्धान्तमाह—

अधिकोपदेशात्तु बादरयाणस्यैव तद्दर्शनात् ॥ ८ ॥

तुशब्दो जैमिनीयं मतं व्यावर्तयति । कुतः ? अधिकोपदेशात् । संसारिणो निरुपाधिकस्य परमात्मनः सर्वेषु वेदान्तेषूपदेशात् । यन्मतं बादरायणस्यैवं तत्तथैव स्थितं तद्दर्शनात् । 'यः सर्वज्ञ' इत्यादिभ्यः ॥ ८ ॥

ननूक्तमाचारादित्यत आह—

तुल्यं तु दर्शनात् ॥ ९ ॥

तुशब्दः पूर्वस्याऽऽचारस्य विद्यान्तरविषयत्वमाह ॥ ६ ॥

तुल्यं समाचारस्य दर्शनम् 'एतद्ध स्मे'त्यादिना 'यदेवे'त्यादिश्रुतेरुक्तमित्यत आह—

न सार्वत्रिकी ॥ १० ॥

न सर्वविद्याविषयेयं श्रुतिः, किन्तु प्रकृतोद्गीथविद्याविषयैव ॥१०॥

'तं विद्ये'त्यादिना फले समुच्चय उक्त इत्यत आह—

## विभागः शतवत् ॥ ११ ॥

विभागोऽयं न समुच्चयः। विद्यया ऽन्यस्याऽऽरम्भणं, कर्मणा ऽन्यस्य। शतवत्। यथा शतमाभ्यां दीयतामित्यत्र विभागस्तद्वत् ॥१७॥

ननूक्तं तद्वतो विधानादित्यत आह—

## अध्ययनमात्रवतः ॥ १२ ॥

न ज्ञानवतः ॥ १२ ॥

यदप्युक्तं नियमान्नेत्यत आह—

## नाऽविशेषात् ॥ १३ ॥

त्वदुक्तं न। 'कुर्वन्नेवे'त्यत्र विदुष इति विशेषस्याऽश्रवणात्॥१३॥

प्रकरणसामर्थ्याद्विद्वानेव सम्बध्यतइत्यत आह—

## स्तुतये ऽनुमतिर्वा ॥ १४ ॥

वाशब्दो विदुषः स्तुत्या तेषामवश्याऽनुष्ठेयत्वमाह ॥ १४ ॥

ननु कर्मश्रुतेर्विद्यास्तावकत्वमित्यत्रापि किं नियामकमित्यत आह—

## कामकारेण चैके ॥ १५ ॥

अवगतपरमार्थाः प्रजां न कामयन्ते कामकारेणेति श्रुत्यर्थनिर्देशः। चकारो विद्वदनुभवं दर्शयति ॥ १५ ॥

ननु ब्राह्मणादिशरीरे कथं कर्माऽभाव ? इत्यत आह—

## उपमर्दं च ॥ १६ ॥

क्रियाकारकादेरामनन्ति 'यत्र त्वस्ये'त्यादिना। चकारस्तादृक् प्रत्ययं समुच्चिनोति ॥ १६ ॥

तथापि कथं गृहस्थस्य कर्माऽभाव? इत्यत आह—

## ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥

ऊर्ध्वरेतस्सु आश्रमेषु विद्या श्रूयते न तत्र कर्माणि। चकारः

कर्मिणां विद्याऽनधिकारमाह । अत एव न सन्तीत्यत आह—शब्दे हि । हि यस्मात् 'त्रयो धर्मस्कन्धा' इत्येतस्मिन् शब्दे ऽवगम्यते॥१७॥

पूर्वाधिकरणे ऊर्ध्वरेतःस्वाश्रमेषु विद्यायाः कर्मनिरपेक्षता उक्ता, इदानीं तएवाऽऽश्रमा न सन्तीत्याक्षिपति । अथ वा पुरुषार्थोऽधिकरणे ज्ञानस्याऽसहायस्य मोक्षफलत्वमुक्तं, तन्न सम्भवति, गृहस्थादीनामपि ब्रह्मनिर्देष्टृत्वस्य संस्थानस्याऽभिधानात् तदनुष्ठितकर्मणा च ज्ञानसहकारित्वप्रतीतेरित्याक्षिप्यते—

## परामर्शं जैमिनिरचोदना चाऽपवदति हि॥१८॥

जैमिनिराचार्य'स्त्रयो धर्मस्कन्धा' इत्यादिशब्दनिर्दिष्टफलानामाश्रमाणां परामर्शमात्रं मन्यते । कुतः ? अचोदना । यतः विधायकशब्दाऽभाव इत्यर्थः । ननु विधिः कल्पनीय इत्यत आह-अपवदति हि । यस्माँ'दहरहर्वा' इत्यादिना अपवदति अतो न कल्प्यो विधिः । चकारो गृहस्थस्य प्रसिद्धिविरोधमाह ॥ १८ ॥

परिहरति—

## अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

अनुष्ठेयमाश्रमान्तरं बादरायण आचार्यो मन्यते, वेदे श्रवणात् । न चाऽन्धपङ्ग्वादिविषयत्वम् । तत्कुतः ? साम्यश्रुतेः । गार्हस्थ्येन 'त्रयो धर्मस्कन्धा' इत्यादिना ॥ १९ ॥

ननु तावतापि विधिर्न सिद्ध्येदित्यत आह—

## विधिर्वा धारणवत् ॥ २० ॥

वाशब्दो विध्यभावं निराकरोति । विधिरेवाऽयमपूर्वार्थत्वात् धारणवत् । 'उपरि हि देवेभ्यो धारयती'त्यत्र तद्वत् । सति चाऽऽश्रमान्तरे ब्रह्मसंस्थत्वं न कर्मिणामित्यभिप्रायः ॥ २० ॥

एवं तावदनुष्ठेयमान्तरं गार्हस्थ्येन साम्यश्रुतेरित्युक्तं, तर्हि रसतमत्वादीनामङ्गाश्रितत्वेन 'स्वर्गं लोकमाहवनीय' इत्यादिस्तुतिसाम्यात् स्तुत्यर्थत्वमिति प्रत्युदाहरणेन सूत्राऽवयवेनाक्षिप्याऽवयवान्तरेण समाधत्ते—

## स्तुतिमात्रमुपादानादिति चेन्नाऽपूर्वत्वात्॥२१॥

'स एष रसानां रसतम' इत्यादि स्तुतिमात्रं न विधिः । उद्गीथादिकर्माऽङ्गानां स्तावकत्वेनोपादानादिति चेत्तन्न । कुतः ? अपूर्वत्वात् । रसतमाद्यर्थस्य ॥ २१ ॥

ननु विधिकल्पनमेव दोष इत्यत आह—

भावशब्दाच्च ॥२२ ॥

भावशब्दो विधिशब्दः 'उपासीते'त्यादि । चकारो ऽपूर्वाधिगमे कल्पनं न दोष इत्याह ॥ २२

एवं तावत् उद्गीथादेः स्तुत्यर्थत्वात्सावकाशात्तुपास्यविषयसमर्पकत्वं रसतमत्वादेर्ज्याय इत्युक्तं, तर्ह्याख्यानानामपि विद्यास्तुत्यर्थत्वात्सावकाशात्पारिप्लवशेषत्वे ज्यायो ऽनुष्ठानपर्यवसानत्वं सम्भवतीति दृष्टान्तेन सूत्राऽवयवेनाक्षिप्य समाधत्ते—

पारिप्लवार्था इति चेन्न विशेषितत्वात्॥२३॥

'अथ ह याज्ञवल्क्यस्ये'त्याद्याख्यानश्रुतयः पारिप्लवार्था इति चेत् तन्न । कुतः ? 'पारिप्लमाचक्षीते'त्युपक्रम्य 'मनुर्वैवस्वत' इत्यादिना विशेषितत्वात् ॥ २३ ॥

ननूपलक्षणार्थं तद्विशेषणं स्यादित्यत आह—

तथा चैकवाक्यतोपबन्धात् ॥ २४ ॥

चकार उपलक्षणार्थत्वं वारयति । तथा आख्यानानां पारिप्लवार्थत्वे सति सन्निहितविद्योपयोगो न्याय्यस्तद्वतोपाख्यानानाम् । कुतः ? एकवाक्येनोपबन्धनात्, तत्र तत्राऽऽख्यानानां विद्याभिः सम्बन्धस्योपलम्भात् ॥ २४ ॥

पूर्वाधिकरणे आख्यानानां विद्यासन्निधेर्विद्याशेषत्वमुक्तं, तर्हि विद्याप्रकरणे 'यज्ञेने'त्यादिवाक्येन यज्ञादीनां विद्यायां विनियोगात् तेषां विद्याशेषत्वमिति दृष्टान्तेनाक्षिप्य समाधत्ते—

अत एव चाऽग्नीन्धनाद्यनपेक्षा ॥ २५ ॥

चकारः कारणान्तरं व्यावर्तयति । यतो ज्ञानात्पुरुषार्थः अत एव विद्यायाः स्वफले ऽग्नीन्धनादिकर्मणामनपेक्षा ॥ २५ ॥

पूर्वाधिकरणे विद्याफले कर्माऽनपेक्षा उक्ता, यथा फले तद्वदुत्पत्तावपि इति दृष्टान्तेनाक्षिप्य समाधत्ते—

**सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥**

चकाराद्विद्याया उत्पत्तावनपेक्षत्वं वारयति । सर्वापेक्षा सर्वस्याऽऽश्रमादिकर्मजातस्य विद्याया उत्पत्तावपेक्षा । कुतः ? यज्ञादिश्रुतेः । 'विविदिषन्ती'त्यादिना इच्छायाः । अश्ववदिति योग्यतायां निदर्शनम् । अश्वो रथस्य वहने ऽपेक्षितो न लाङ्गलस्यैवं विद्याया उत्पत्तौ कर्मापेक्षा न ज्ञानफले ॥ २६ ॥

तर्हि कर्माण्येव सन्तु, न ज्ञानोत्पत्तावन्यदनुष्ठेयमित्यत आह—

**शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्याऽनुष्ठेयत्वात् ॥ २७ ॥**

तुशब्दः शङ्कानिराकरणार्थः । कुतः ? तद्विधेः । तेषां शमादीनाम् इत्याद्युपक्रम्य 'पश्ये'दिति विधेः । स विधिः स्वतन्त्र इत्यत आह—तदङ्गतया । तस्या विद्याया अङ्गत्वेन विधिर्यस्ततो विद्यार्थिनां तेषामवश्याऽनुष्ठेयत्वादन्तरङ्गसाधनत्वं तेषाम् ॥ २७ ॥

पूर्वाधिकरणे विविदिषन्तीति पञ्चमलकाराऽऽश्रयणेन विधिरुक्तः, एवं चा'ऽन्नं भवती'ति विधिरिति दृष्टान्तेनाक्षिप्य समाधत्ते—

**सर्वान्नाऽनुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥**

'न ह वा एवंविदी'त्यादिना सर्वोऽन्नानुमतिरनुज्ञाता, सापि प्राणात्यये परस्यामापदि । कुतः ? तद्दर्शनात् । तस्य प्राणात्यये सर्वान्नभक्षणस्य 'मटचीहतेष्वि'त्यादिना दर्शनात् ॥ २८ ॥

ननु श्रुतस्य कस्मात्सङ्कोचः क्रियते ? इत्यत आह—

**अबाधाच्च ॥ २९ ॥**

'आहारशुद्धौ सत्त्वशुद्धि'रित्यादेः शास्त्रस्य । चशब्दाच्छिष्टाऽऽचारस्य च ॥ २९ ॥

ननु शास्त्रद्वयं विद्वदविद्वद्विषयं भवत्वित्यत आह—

**अपि च स्मर्यते ॥ ३० ॥**

'जीवितात्ययमापन्नो यो ऽन्नमत्ति यतस्ततः' इत्यादिना साधारण्यमपिशब्दो दृश्यते ऽपीत्याह ॥ ३० ॥

ननु निषेधाऽभावे नेदं बुद्धिसामर्थ्यात्कल्पयितुं शक्यमित्यत आह—

## शब्दश्चातो ऽकामकारे ॥ ३१ ॥

अकामकारः कामकारनिवृत्तिप्रयोजनः कठानां 'तस्माद् ब्राह्मणः सुरां न पिबेदि'ति सर्वान्ननिषेधकशब्दः । अतो ऽस्माद्विधेरभावात्सो ऽप्युपपन्नः । चकारो लौकिकं प्रतिषेधमाह ॥ ३१ ॥

पूर्वाधिकरणे यथा शास्त्रान्तराविरोधात् सर्वत्र वचनं विद्यायाः स्तावकमुक्तं तद्वद्विविदिषावचनमपि विद्यायाः स्तावकमिति । अन्यथा कर्मणामनेकत्वाऽभावात् मुमुक्षोरेवाऽनुष्ठेयत्वमिति दृष्टान्तेनाक्षिप्य समाधत्ते—

## विहितत्वाच्चाऽऽश्रमकर्मापि ॥ ३२ ॥

चकारस्त्वर्थे । स हि मुमुक्षोरेव नाऽनुष्ठेयत्वं कर्मणां वारयति, किं त्वनुष्ठेयं मुमुक्षूणामप्याश्रमकर्माऽग्निहोत्रादिकम् । कुतः ? विहितत्वात् । 'यावज्जीवमग्निहोत्र'मित्यादिना । एवं चेद्विद्यासाधनानि न स्युरित्यत आह—

## सहकारित्वेन च ॥ ३३ ॥

सहकारित्वं साधनत्वं 'यज्ञेने'त्यादिना विद्यासाधनत्वेनापि विहितत्वादित्यर्थः ॥ ३३ ॥

ननु तर्हि दर्शपौर्णमासादीनां विद्यासहकारित्वपक्षे कर्मभेदोऽत आह—

## सर्वथापि तएवोभयलिङ्गात् ॥ ३४ ॥

ते एवाऽग्निहोत्रादयो धर्मा अनुष्ठेयाः । कुतः ? उभयलिङ्गात् । श्रुतिस्मृतिलिङ्गात् । 'विविदिषन्ती'त्यादिश्रुतिः । 'अनाश्रितः कर्मफल'मित्यादिका स्मृतिः । अत एव हि प्रसिद्धवदुत्पन्नानां कर्मणां विनियोगं कुर्वन्ति । अथ वा वेदकत्वं लिङ्गं तस्मात् ॥ ३४ ॥

ननु साधनसम्पन्नस्य यदि विद्यायां कश्चनाऽतिशयः श्रुतो वा स्यात् तदा यज्ञादीनां सहकारित्वं कल्प्यमानमुचितं स्यादित्यत आह—

## अनभिभवं च दर्शयति ॥ ३५ ॥

'एष ह्यात्मा न नश्यति यं ब्रह्मचर्येण'त्यादिना । अत्र प्रत्यक्षमप्याह ॥ ३५ ॥

पूर्वाधिकरणे नित्यानां यज्ञादीनां विद्यायाः पृथगनियोगात् न नित्याऽनित्यसंयोगविरोध इत्युक्तं, मा भूत् गृहस्थाऽऽश्रमकर्मणि विरोधः, विधुरादिके तु स्यादित्याक्षिप्य समाधत्ते—

## अन्तराचापि तु तद्दृष्टेः ॥ ३६ ॥

अन्तरा विधुरादीनामन्तरालवर्तिनां विद्यायामधिकारः । कुतः ? तद्दृष्टेस्तस्याऽधिकारस्य रैक्वादिषु दृष्टेः । तुकारस्त्वन्तरालवर्तिनामनधिकारं व्यावर्तयति । चकारो ऽन्येषामप्यधिकारं समुच्चिनोति॥३६॥

नन्विदं दर्शनमस्मार्तमित्यत आह—

## अपि च स्मर्यते ॥ ३७ ॥

संवर्तप्रभृतीनामन्तरालवर्तिनां महायोगित्वं पुराणादौ ॥ ३७ ॥

ननु कर्महीनानामशुद्धाऽन्तःकरणानां कथं विद्यायामधिकारः ? इत्यत आह—

## विशेषाऽनुग्रहश्च ॥ ३८ ॥

तेषामपि जपोपवासादि कर्मविशेषैरनुग्रहः । चकाराज्जन्मान्तरकृतैरपि ॥ ३८ ॥

एवं चेदाश्रमकर्मणामनुष्ठानं व्यर्थमित्यत आह—

## अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥

तुशब्द आश्रमकर्मणामनुष्ठानस्याऽवैयर्थ्यमाह । अतो ऽन्तरालवर्तित्वादितरदाश्रमवर्तित्वं ज्यायः श्रेष्ठं विद्यासाधनम् । कुतः ? श्रुतिस्मृतिलिङ्गाच्च । श्रुतिर्लिङ्ग'मनाश्रमी न तिष्ठे'दित्यादि । तस्मात् । चकारस्ताभ्यां विहितत्वमप्याह ॥ ३९ ॥

पूर्वाधिकरणे ऽनाश्रमकर्मिणामपि विद्यासाधनत्वमुक्तम्, एवं चेदाश्रमभ्रष्टानामपि तद्वदेवाऽनाश्रमकत्वेन विद्यासाधनत्वमिति दृष्टान्तेनाक्षिप्य समाधत्ते—

## तद्भूतस्य तु नाऽतद्भावो जैमिनेरपि नियमाऽतद्रूपाऽभावेभ्यः ॥ ४० ॥

तुशब्द उत्तमाऽऽश्रमाऽभिरूढस्याऽऽमरणं तस्मिन्नेवाऽवस्थानमाह । तद्भूत[illegible]नाश्रमाऽऽश्रमिणां ऽतद्भावः अनदाश्रमाऽवस्थितस्त[illegible] ना भवतीति जैमिनेराचार्यस्य मतं, किमु बादरायणस्य । कुतः ? [illegible]ऽतद्रूपाऽभावेभ्यः । नियम'स्ततो न पुनरियाद्'इति । [illegible] यथा ब्रह्मचर्यादाश्रमान्तरगमनं तद्रूप्यते शब्देनैव संन्यासा-[illegible] । अभावश्च शिष्टाचारस्य संन्यासादीनां गार्ह-स्थ्य[illegible]: ॥ ४० ॥

पूर्वाधिकरणे शास्त्राऽभावान्न तत्प्रत्यवरोहित्वमित्युक्तं, तद्वदेव शास्त्राऽभावात् तेषां प्रायश्चित्तमपीत्याक्षिपति—

## न चाऽऽधिकारिकमपि पतनाऽनुमानात् तदयोगात् ॥ ४१ ॥

अधिकारलक्षणे षष्ठाऽध्याये उक्तमाधिकारिकम्, अब्रह्मचारी पशुश्च तद्वदाधानस्याऽप्राप्तकालत्वादिति अवकीर्णी 'अथ यो ब्रह्मचारी स्त्रियमुपेयात्स गर्दभं पशुमालभेते'ति ब्रह्मचारिणः स्त्रीगमने गर्दभः पशुः । सोऽपि तद्वदुपनयनहोमवत् । यथोपनयनहोमो लौकिकाग्नौ तद्वत् अयमपि पशुर्लौकिक एव । कुतः ? आधानस्य दारसंग्रहपुरःसरस्य ब्रह्मचारिणोऽप्राप्तत्वादिति यदुक्तं तदपि न नैष्ठिकब्रह्मचारिण एवं प्रायश्चित्तम् । कुतः ? 'आरूढो नैष्ठिकं धर्म'मित्यादिना अप्रतिसन्धेयस्य पतनस्याऽनुमानात् स्मरणात् छिन्नशिरस इव प्रतिक्रियाऽभावान्नैष्ठिकस्य प्रायश्चित्ताऽयोगादिति पूर्वपक्षः ॥ ४१ ॥

राद्धान्तमाह—

## उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥४२॥

तुशब्दः [illegible]ऽभावं व्यावर्तयति । एके आचार्या गुरुदारादिभ्योऽन्यत्र ब्रह्मचर्यच्यवनमुपपूर्वमपि उपपातकमप्याहुः, कि-

मुत प्रायश्चित्तस्य सत्त्वम् । अतः प्रायश्चित्तस्य भावं मन्यामहे । अशनवत् । यथा मधुमांसादिभक्षणे उपकुर्वाणस्य पुनःसंस्कारः प्रायश्चित्तं तद्वत् । तदुक्तं प्रमाणलक्षणे 'समा विप्रतिपत्तिः स्यात्' यववराहादिकारणपूर्वपक्षे आर्यम्लेच्छयोर्यववराहादिषु 'समा विप्रतिपत्तिः स्यात्' इति सूत्रं सिद्धान्तितम्। तेन यववराहादिशब्दानामार्यप्रसिद्धानामेव स्वीकार इत्येतदर्थं सूत्रं 'शास्त्रस्था वा तन्निमित्तत्वा'दिति । वाशब्दो म्लेच्छप्रसिद्धिं व्यावर्तयति । शास्त्रस्थैवार्यप्रसिद्धिः स्वीकरणीया । कुतः ? तस्य शास्त्रस्य यत्राऽन्या ओषधयो म्लायन्ते' इत्यादेर्निमित्तत्वात् नियामकत्वात्। अथ वा तस्याऽर्थस्य प्रसिद्धेः शब्दार्थसंगतिग्रहणं निमित्तत्त्वात् ॥ ४२ ॥

पूर्वाधिकरणे आरूढपतितानामपि प्रायश्चित्तमस्तीत्युक्तं, प्रायश्चित्तवद्व्यवहारोपि तेषां स्यादिति दृष्टान्तेनाक्षिप्य समाधत्ते—

## बहिस्तूभयथा ऽपि स्मृतेराचाराच्च ॥ ४३ ॥

तुशब्दः कृतप्रायश्चित्ते व्यवहाराऽभाव माह । यद्यवकीर्णित्वमुपपातकं यदि वा महापातकम् उभयथापि शिष्टैस्ते कृतप्रायश्चित्ता अपि बहिष्कार्याः । कुतः? स्मृतेराचाराच्च । स्मृति'रारूढपतित'मित्याद्या । आचारः शिष्टानाम् । चकारात्प्रायश्चित्ताभिधानादपि ॥४३॥

पूर्वाधिकरणे वचनाद्व्यवहार्यत्वमुक्तं तद्व'द्वर्षति हे'ति वचनादङ्गावबद्धमुपासनं स्वामिन इति दृष्टान्तेनाक्षिप्य समाधत्ते—

## स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥

अङ्गावबद्धान्युपासनानीति स्वामिनो यजमानस्य कर्माणीत्यात्रेय आचार्यो मन्यते । हेतुमाह—फलश्रुतेरिति । 'वर्षति हास्मै'त्यादेरिति पूर्वपक्षः ॥ ४४ ॥

राद्धान्तस्तु—

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४५ ॥

आर्त्विज्यमित्यौडुलोमिराचार्यो मन्यते । हि यस्मात् तस्मै साङ्गकर्मसिद्ध्यर्थं यजमानेनर्त्विक् परिक्रीयते ॥ ४५ ॥

पूर्वाधिकरणे 'बको दाल्भ्य' इति वाक्यशेषादङ्गोपासनमृत्विक्कर्मेत्युक्तम्, एवमिहापि विधिरहितवाक्यशेषा'दथ मुनि'रिति दृष्टान्तेनाक्षिप्य समाधत्ते—

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४६ ॥

सहकार्यन्तरस्य मौनस्य बाल्यपाण्डित्यवद्विधिरेवाश्रयणीयः। यदत्रोक्तं तन्मौनमित्यत आह—तृतीयं बाल्यं पाण्डित्यं चोक्तम्। कस्यैतत्? इत्यत आह—तद्वत 'आत्मानं विदित्वे'त्यादिनोक्तो यः संन्यासी तद्वान् विद्यावान् तस्य चेद्यर्थं विधानमित्यत आह—पक्षेणेति। भेददर्शनस्य प्राबल्यं तस्मिन्पक्ष इत्यर्थः। सहकारिविधाने निदर्शनं विध्यादिवत्। यथा पौर्णमासादावाधानादिकं तद्वत् ॥४६॥

विद्यावांश्चेत् संन्यस्यति तर्हि कस्मात् छान्दोग्ये 'कुटुम्ब' इत्यादिना गृहस्थेनोपसंहार इत्यत आह—

## कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४७ ॥

तुशब्दो विशेषणार्थः। कृत्स्नभावोऽस्य विशेष्यते बहुलाऽऽयासानि हि बहून्याश्रमकर्माणि यज्ञादीनि तं प्रति कर्तव्यतयोपदिष्टानि। आश्रमान्तरकर्माणि च यथासम्भवमहिंसेन्द्रियसंयमादीनि तस्यापि विद्यन्ते। तस्मात् गृहमेधिनोपसंहारो न विरुध्यते ॥ ४७ ॥

ननु यथा ब्रह्मचारिवानप्रस्थयोरश्रौतत्वं तद्दृष्टान्तेनेतरस्याप्यस्त्वश्रौतत्वमित्यत आह—

## मौनवदितरेषामप्युपदेशात् ॥ ४८ ॥

इतरेषां ब्रह्मचारिवानप्रस्थाश्रमवृत्तीनामप्युपदेशात् 'त्रयो धर्मस्कन्धा' इत्यादिना। किंवत्? मौनवत्। संन्यासिमात्रोपलक्षणमेतत् गृहस्थस्यापि संन्यासिवत् गृहस्थवत् ब्रह्मचारिवानप्रस्थयोरपि श्रौतत्वमेव स्यादित्यर्थः ॥ ४८ ॥

पूर्वाधिकरणे मौनशब्दस्य ज्ञानाऽतिशये प्रसिद्धत्वात् मौनविधिराश्रितः, एवं बालशब्दस्यापि कामचारादिकारिणि प्रसिद्धत्वात् अत्रापि स एवार्थ इति दृष्टान्तेनाक्षिप्य समाधत्ते—

अनाविष्कुर्वन्नन्वयात् ॥ ४९ ॥

'बाल्येन तिष्ठासे'दित्यत्र बाल्येनाऽवस्थानं नाम एतत् यद्रागद्वेषादि अनाविष्कुर्वन् न तु कामचारादि। कुतः? रागादिराहित्ये विद्यापकारस्याऽन्वयात् ॥ ४६ ॥

पूर्वाधिकरणे विद्योपयोगान्न रागादिकं बालशब्दार्थः सम्भवादित्युक्तम् अत्रापि युक्तं, विद्यानां फलस्येह लोके एव सम्भवात् ऐहिकफला विद्येति दृष्टान्तेनाक्षिप्य समाधत्ते—

ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५० ॥

कर्मान्तरेणाऽसति प्रतिबन्धे ऐहिकमस्मिन्नेव जन्मनि विद्याफलं कर्मान्तरेण सति' प्रतिबन्धे जन्मान्तरे ऽपि विद्या जायते। कुतः? गर्भस्थ एव वामदेवः प्रतिबुबुधे ब्रह्माऽहमभवामिति वदन्तो जन्मान्तरे संचितात्तु साधनाज्जन्मान्तरे विद्योत्पत्तिं दर्शयन्ति ॥ ५० ॥

पूर्वाधिकरणे विद्याया ऐकरूप्येपि यज्ञादीनां साधनानामनेकरूपता इह वा स्यादित्युक्तं, तर्हि अनियतसाधनत्वान्मोक्षोप्यनियत एव स्यात् कर्मफलवदिति दृष्टान्तेनाक्षिप्य समाधत्ते—

एवं मुक्तिफलाऽनियमस्तदवस्थाऽवधृते-
स्तदवस्थाऽवधृतेः ॥ ५१ ॥

यथा विद्यासाधनानां विद्याफले विशेष इह परत्र चेति नैवं मुक्तिलक्षणे फले। कुतः? तदवस्थाऽवधृतेः। मोक्षाऽवस्थायां ब्रह्मरूपाया एकरूपत्वेना 'ऽस्थूलमन'ण्वित्यादिना ऽवधृतेरवधारणात्। पदाभ्यासो ऽध्यायपरिसमाप्त्यर्थः ॥ ५१ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याऽऽनन्दात्मपूज्य-
पादशिष्यस्य श्रीशङ्करानन्दभगवतः कृतौ ब्रह्म-
सूत्रदीपिकायां तृतीयाऽध्यायस्य चतुर्थः पादः ॥
संपूर्णश्च तृतीयो ऽध्यायः।

——:o:——

तृतीये ऽध्याये साधनचिन्ता वृत्ता। चतुर्थे फलचिन्ता प्रवर्तते। तत्रापि प्रथमेन पादेन जीवन्मुक्तिः प्रतिपाद्यते। तत्राप्यात्मेत्याद्यधिकरणचतुष्टयं प्रासङ्गिकम्, अन्यत्तु साधनाध्यायशेषमपि प्रमाणफलत्वेनाऽत्र फलाध्याये सङ्गतं, तत्राहंग्रहोपासनानां श्रवणादीनां चाऽर्थसिद्धा ऽऽवृत्तिरित्याह—

## आवृत्तिरसकृदुपदेशात् ॥ १ ॥

प्रत्ययानामावृत्तिः करणीया। कुतः? 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्यादिना ऽसकृदुपदेशात् ॥ १ ॥

ननु श्रवणादीनां प्रत्येकं सकृत् श्रवणे प्रत्ययावृत्तिः कथं सिद्ध्यतीत्यत आह—

## लिङ्गाच्च ॥ २ ॥

'रश्मींस्त्वं पर्यावर्तयता'दित्यादेः। चकाराद्दर्शनसामर्थ्यादपि॥२॥

पूर्वाधिकरणे आत्मज्ञानाऽऽवृत्तिः करणीयेत्युक्तं, तत्र जीवो नित्यप्रत्यक्षः, नित्याऽपरोक्ष एवाऽऽत्मा कस्य ज्ञानस्यार्थंनियमावृत्ति?रित्याक्षिप्य समाधत्ते—

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥

तुशब्दो ऽन्यत्र त्वंग्रहं व्यावर्तयति। 'यो ऽयं परमात्मेति त्वं वा अहमस्मी'त्यादिना च उपगच्छन्ति गृह्णन्ति च ग्राहयन्त्यपि च। 'एष त आत्मे'त्यादिना ॥ ३ ॥

पूर्वाधिकरणे जीवपरमात्मनोरभेदग्रह उक्तः 'एष त आत्मे'त्यादिश्रुत्या, तद्वदात्मनो ब्रह्मेत्यादावपि प्रतीकेष्वभेदग्रह इति दृष्टान्तेनाक्षिप्य समाधत्ते—

## न प्रतीकेन हि सः ॥ ४ ॥

प्रतीकोपासने 'मनो ब्रह्मे'त्यादौ नात्मेति ग्रहीतव्यम्। हि यस्मात् स उपासको नात्मत्वेन प्रतीकानि ग्रहीतुं शक्तः ॥ ४ ॥

पूर्वाधिकरणे 'मनो ब्रह्मे'त्यादौ नैका दृष्टिरित्युक्तम्। एवं चेन्नियामकाऽभावात् ब्रह्मणि मनआदिदृष्टिः करणीयेति बुद्धिसान्निध्यादाक्षिप्य समाधत्ते—

## ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

मनआदौ ब्रह्मदृष्टिः कार्या ब्रह्मण उत्कर्षात्। उत्कृष्टदृष्टौ निकृष्टे कृतायां निकृष्टस्योत्कृष्टता भवति ॥ ५ ॥

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

उद्गीथाद्यङ्गेऽषु आदित्यादिमतयः कर्त्तव्याः। कुतः? उपपत्तेः। एवं ह्युद्गीथादीनामादित्यादिमतिसंस्कारे कर्मण्यतिशयः स्यात्। चकारो नादित्यादिषु उद्गीथादिमतय इत्याह। एतच्चतुष्टयं प्रासङ्गिकम् ॥ ६ ॥

पूर्वाधिकरणे आदित्यादिमतय उद्गीथादिसंस्कारत्वेन करणीया इत्युक्तं, तासु यथा कामपरतन्त्रत्वात् नाऽऽसननियम एवमन्यास्वपि विद्यासु अविशेषादिति बुद्धिस्थत्वेन दृष्टान्तेनाक्षिप्य समाधत्ते—

## आसीनः सम्भवात् ॥ ७ ॥

प्रतीकाद्युपासनेष्वासीन एवोपासनां कुर्यात्। कुतः? सम्भवात्। प्रत्ययावृत्तेरुपविष्टस्य ॥ ७ ॥

ननूपासनस्य निर्गुणब्रह्मज्ञानवदनियतिशासनस्य कुतो न स्यादित्यत आह—

## ध्यानाच्च ॥ ८ ॥

ध्यायत्यर्थं एष यत्समानप्रत्ययप्रवाहकरणं, ध्यायतिश्च प्रशिथिलाङ्गचेष्टेषु प्रतिष्ठितदृष्टिष्वेकविषयाक्षिप्तचित्तेषु बकादिषु दृष्टा। चकार आसीनस्य नियममाह ॥ ८ ॥

ननु गच्छतामपि ध्यायत्यर्थः सम्भवी इत्यत आह—

## अचलत्वञ्चापेक्ष्य ॥ ९ ॥

'ध्यायतीव' पृथिवीत्याद्युक्तं, चकारो गमनध्यानयोरितरेतरव्याहतिरित्याह ॥ ९ ॥

ननु किमिदं यौक्तिकमेवेत्याशङ्क्य नेत्याह—

## स्मरन्ति च ॥ १० ॥

'शुचौ देशे' इत्यादिना चकारात्पठन्त्यपि 'त्रिरुन्नत'मित्यादिना ॥ १० ॥

पूर्वाधिकरणे आसीनेन समानप्रत्ययप्रवाहः करणीयः, सम्भवादित्युक्तं, अत्रापि वैदिकत्वेन दिग्देशादिनियमः सम्भावित इति दृष्टान्तेनाक्षिप्य समाधत्ते—

## यत्रैकाग्रता तत्राऽविशेषात् ॥ ११ ॥

दिग्देशकालेषु न नियमः । यत्र यस्यां दिशि यस्मिन्काले वा मनःस्वास्थ्यं तत्रैवोपासनम् । कुतः ? अविशेषात् । विशेषाऽनुपालम्भात् ॥ ११ ॥

पूर्वाधिकरणे दिग्देशाद्यनियम उक्तश्चित्तप्रसादाऽविशेषेण हेतुना, तथा काम्यानामपि यावदिच्छं चिन्तनीयमिति दृष्टान्तेनाक्षिप्य समाधत्ते—

## आ प्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥

अभ्युदयफलानां प्रत्ययानामा प्रायणात् आ मरणादावृत्तिः । हि यस्मात् तत्रापि मरणे ऽपि 'यच्चित्त' इत्यादिश्रुतिभ्यः 'यं यं वापि'-त्यादिस्मृतिभ्यश्च प्रत्ययावर्तनं दृष्टम् । अपिशब्दात्पूर्वमपि सातत्ये 'सदा तद्भावभावित' इत्यादिस्मृतिभ्यः ॥ १२ ॥

पूर्वाधिकरणे 'सदा तद्भावभावित' इत्यादिस्मृत्या आ प्रायणादभ्युदयप्रत्ययानामावृत्तिरुक्ता, तद्वदत्रापि 'प्रकृतिस्त्वां नियोक्ष्यति' 'नाऽभुक्तं क्षीयते कर्म'त्यादिस्मृतिभ्यो विदुषो ब्रह्मज्ञानान्नोत्तराऽघाश्लेषः, न च पूर्वस्य विनाश इति दृष्टान्तेनाक्षिप्य समाधत्ते—

## तदधिगम उत्तरपूर्वाऽघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥

तस्य ब्रह्मणो ऽधिगमे उत्तराऽघस्याऽश्लेषः पूर्वाऽघस्य विनाशः । कुतः ? तद्व्यपदेशात् । तयोरश्लेषविनाशयोर्व्यपदेशः अश्लेषस्य 'तद्यथा पुष्करपलाशे' इत्यादिना विनाशस्य 'तद्यथेषीकातूल' इत्यादि, तस्मात ॥ १३ ॥

पूर्वाधिकरणेऽघाऽश्लेषविनाशावुक्तौ भवेतां, मास्तु सुकृतस्याऽभुक्तस्येत्याक्षिप्य समाधत्ते—

## इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

इतरस्य सुकृतस्यापि यथा दुष्कृतस्यैवमघाऽसंश्लेषः। एतदुपलक्षणं विनाशस्यापि 'उभे उ हैवैष तरती'त्यादिश्रुतेः। तुशब्दोऽवधारणार्थः। पाते शरीरस्य पतने यत इदं सिद्धं शरीरस्य पाते विदुषो मुक्तिर्भवत्येव ॥ १४ ॥

पूर्वाधिकरणे सुकृतस्यापि क्षय उक्तः, तथा च सद्यः शरीरपातः स्यादित्याक्षिप्य समाधत्ते—

## अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

तुशब्द आरब्धकार्ययोः क्षयं व्यावर्तयति। द्वे पूर्वसुकृतदुष्कृते ते अनारब्धकार्ये। तयोरपि इतरयोरिव क्षयं व्यावर्तयति एवकारः। कुतो ऽयं नियम? इत्याह-तदवधेः। तस्य शरीरपातस्याऽवधेः कारणात् 'तस्य तावदेव चिर'मित्यादिवाक्येन ॥ १५ ॥

पूर्वाधिकरणत्रयेण सगुणविद्यायां निर्गुणविद्यायां चाऽनारब्धकार्ययोः सुकृतदुष्कृतयोः क्षय उक्तः, तत्र यथा निर्गुणविद्यायामुत्पन्नायामग्निहोत्राद्यनुपयोगः एवं सगुणायामपीति दृष्टान्तेनाक्षिप्य समाधत्ते। अथ वा पूर्वाधिकरणे काम्यस्य सुकृतस्य क्षय उक्तः, काम्यवन्नित्यस्यापि विद्यया क्षयसम्भवात् न विद्याया हेतुत्वमित्याक्षिप्य समाधत्ते—

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥

तुशब्दो नित्यस्याऽग्निहोत्रादेः कर्मणः क्षयं व्यावर्तयति। नित्यमग्निहोत्रादि तत्तस्या विद्यायाः कार्यायैव मोक्षायैव परम्परया ऽऽहुतेस्तद्दर्शनात् तस्याऽग्निहोत्रादेर्विद्याकार्यत्वस्य 'तमेत'मित्यादेर्दर्शनात्। किंविषयं पुनरिदमश्लेषविनाशवचनं किंविषयं वा ऽऽदौ विनियोगवचनम् एकेषां शाखिनां 'तस्यपुत्रा दायमुपयन्ती'त्यादि ? अत उत्तरं पठति—

## अतोन्या ऽपि ह्येकेषामुभयोः ॥ १७ ॥

अतो ऽग्निहोत्रादेर्नित्यात्कर्मणो ऽन्यापि ह्यस्ति साधुकृत्या फलमभिसंधाय क्रियते तस्या विनियोग एवमुक्तः। एकेषां शाखिनां 'सु-

हृदः साधुकृत्या' मिति, तस्या एवेदं संश्लेषविनाशनिरूपणमितर-स्याप्येवमित्यादिना। तथैकजातीयस्य काम्यस्य कर्मणो विद्यां प्रत्युपकारकत्वे संमतिरुभयोरपि जैमिनिबादरायणयोराचार्ययोः॥१८॥

पूर्वाधिकरणे विद्याऽङ्गत्वेन कर्माऽनुष्ठेयमित्युक्तं, तद्वदङ्गाऽवबद्धेष्वप्युपासनेषु नित्यकर्माऽनुष्ठानं तत्सहितमेवेति दृष्टान्तेनाक्षिप्य समाधत्ते—

## यदेव विद्ययेति हि ॥ १७ ॥

विद्यासहितं तद्रहितं च कर्म विद्याङ्गम् । हि यस्मात् 'यदेव विद्यये'ति वाक्यान्तरात् कर्मणो विद्यायोगे ऽति शयमाह, न तु कर्मणो ऽफलत्वे वचनमिदं सार्थकम् ॥ १८ ॥

पूर्वाधिकरणे ऽङ्गावबद्धोपासनासहितस्य कर्मणः फलाधिक्यं तस्य केवलस्य ब्रह्मविद्यासाधनत्वं सामर्थ्यादित्युक्तम्, एवमत्रापि सामर्थ्यादारब्धकार्ययोरपि प्रकारान्तरेण क्षयाऽभावात् ब्रह्मज्ञानादेवोपक्षय इति दृष्टान्तेनाक्षिप्य समाधत्ते—

## भोगेन त्वितरे क्षपयित्वा संपद्यते ॥ १९ ॥

भोगेन भोगेनैव इतरे सुकृतदुष्कृते आरब्धकार्ये क्षपयित्वा ऽनन्तरं सम्पद्यते ब्रह्म 'तस्य तावदेव चिर'मित्यादिश्रुतेः ॥१९॥

## इति श्रीब्रह्मसूत्रदीपिकाया चतुर्थाऽध्यायस्य प्रथमः पादः ।

———;o:———

प्रथमपादे सगुणनिर्गुणविद्याविदो ऽनारब्धकार्ययोः क्षयः आरब्धकार्ययोर्यावदवस्थानं तावन्न मुक्तिः तत्क्षये च विदेहकैवल्यमिति स्थितं, द्वितीये तयोर्न सगुणविदः करणानां लये नाऽविद्वदुत्क्रान्तौ कश्चन विशेष इत्युच्यते। ततश्च तमेव क्रममाश्रित्य वाचो वृत्तेर्लयमाह—

## वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवताया'मित्यत्राऽपि वृत्तिर्मनसि संपद्यते।

कस्मात्? दर्शनात् । मरणादेव वाचः प्रथमोपसंहारस्य वृत्तिवृत्तिमतोरभेदेन वाङ्मनसि शब्दात् । च कारो ऽप्रकृतत्वमाह ॥ १ ॥

## अत एव च सर्वाण्यनु ॥ २ ॥

'इन्द्रियैर्मनसि संपद्यमानै'रित्यत्र सर्वाणीन्द्रियाणि वृत्तिभिर्मनो ऽनुवर्त्तन्ते अत एव दर्शनात् शब्दाच्चेति । चकारो ऽत्रापि पूर्ववत् ॥ १ ॥

पूर्वाधिकरणे मनसो वाचः कारणत्वाऽभावात् तत्र तस्याः सर्वात्मना न लय इत्युक्तम्, अत्र तु मनसः परम्परया विकारत्वादभूते प्राणे लयः स्यादिति प्रत्युदाहरणेनाक्षिप्य समाधत्ते—

## तन्मनः प्राणउत्तरात् ॥ ३ ॥

उक्तं मनो वृत्त्या प्राणे विलीयते । कुतः ? 'मनः प्राणे' इत्युत्तराद् वाक्यात् ॥ ३ ॥

पूर्वाधिकरणे प्राणस्याऽविकारत्वात् विकारे विकाराणां न सर्वात्मना लय इत्युक्तं न्यायेन, अत्र तु न्यायाऽभावात् 'प्राणस्तेजसी'ति श्रुतेस्तेजस्येव तस्य लय इति प्रत्युदाहरणेनाक्षिप्य समाधत्ते—

## सो ऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

स प्राणस्तदध्यक्षे जीवे वृत्त्या प्रलीयते तस्मिन्नध्यक्षे प्रविलयस्या'ऽऽत्मानमन्तकाले सर्वे प्राणा अभिसमायन्ती'त्यादिना ऽभ्युपगमादविशेषेण । आदिशब्देन 'तमुत्क्रामन्तं सर्वे प्राणा' इत्यादिविशेषादपि ॥ ४ ॥

कथं तर्हि 'प्राणस्ते जसी'ति श्रुतिः?रित्यत आह—

## भूतेषु तच्छ्रुतेः ॥ ५ ॥

स प्राणसंवृत्तो ऽध्यक्षस्तेजःसहचरितेषु भूतेषु देहबीजभूतेषु सूक्ष्मेषु व्यवतिष्ठतइत्यवगन्तव्यं 'प्राणस्तेजसी'ति श्रुतेः ॥ ५ ॥

एककस्मिंस्तेजसि श्रुतेः कथं तेजःसहचरितेष भूतेषु ? इत्यत आह—

## नैकस्मिन् दर्शयतो हि ॥ ६ ॥

नैकस्मिन्नेव तेजसि शरीरान्तरप्राप्तिवेलायां जीवो ऽवतिष्ठते । कुतः ? हि यस्मात् दर्शयतः श्रुतिस्मृती 'पृथवीमय' इत्याद्या श्रुतिः;

स्मृति 'रयं व्योममात्रा' इत्याद्या। प्रश्नप्रति वचने च 'आपः पुरुषवचस' इति ॥ ६ ॥

पूर्वाधिकरणे प्राणस्यात्मद्वारा तेजसि वृत्तिलय उक्तः, स विदुष एवेत्याक्षिप्य समाधत्ते—

समाना चासृत्युपक्रमादमृतत्वं चाऽनुपोष्य ॥ ७ ॥

समाना चैवोत्क्रान्ति'र्वाङ् मनसी'त्याद्या विद्वदविदुषोरासृत्युप्रक्रमात् आ उत्तरमर्गोपक्रमात्। ननु विदुषो ऽमृतत्वं प्राप्तस्य कुतो गमन?मित्यत आह–अमृतत्वं चाऽनुपोष्य अदग्धाऽविद्यादिक्लेशबीजानि। इदममृत्वमपि ॥ ७ ॥

पूर्वाधिकरणे ब्रह्मविदो ।विदुषश्च समानोत्क्रान्तिरुक्ता, सैवाऽनुपपन्ना, तेजःकार्यस्य ब्रह्मणि कारणे सर्वात्मना लयोपपत्तेरित्याक्षिप्य समाधत्ते—

तदापीतेः संसारव्यपदेशात् ॥ ८ ॥

तत्तेजआदि भूतसूक्ष्मं श्रोत्रादिकरणाश्रयभूतम् आ पीतेरा संसारादा मोक्षादवतिष्ठते 'योनिमन्ये प्रपद्यन्ते' इत्यादिना संसारव्यपदेशात् ॥ ८ ॥

कुतस्तर्ह्युत्क्रमे तेजो न दृश्यते ? इत्यत आह—

सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

चकारस्त्वर्थेस्तेजसो दर्शनं व्यावर्तयति। तत्तेजः सूक्ष्मं स्वरूपतः परिणामतश्च। तदाह–प्रमाणतश्च। कुतः ? नाडीनिष्क्रमणादिभ्यस्तथा सूक्ष्मस्योपलब्धेः ॥ ९ ॥

ननु सूक्ष्मशरीरस्य स्थूलशरीरान्तरत्वात् तन्नाशे नाश इत्यत आह—

नोपमर्देनाऽतः ॥ १० ॥

अत एव सूक्ष्मत्वात् स्थूलशरीरस्योपमर्देन सूक्ष्मशरीरं नोपमर्द्यते ॥ १० ॥

नन्वस्मिन् एव शरीरे ऊष्मण उपलभ्यमानत्वात्ततोऽतिरिक्तं तेजः कल्पनीयमित्यत आह—

## अस्यैव चोपपत्तेरेष ऊष्मा ॥ ११ ॥

अस्यैव सूक्ष्मशरीरस्यैवोष्मा सूक्ष्मशरीरे सत्युपलब्धेरसत्यनुपलब्धेरित्युपपत्तेः । चकारः श्रुतिमप्याह 'ऊष्मैवैष' इत्यादिकाम् ॥११॥

पूर्वाधिकरणे संसारव्यपदेशान्न तेजसो वृत्तिलय उक्तः । अत्रापि मरणव्यपदेशाद्देह्युपादानोत्क्रान्तिप्रतिषेध इति सिद्धान्तोपक्रमेण सूत्रेणाक्षिपति—

## प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥

सूत्राऽवयवेन सिद्धान्तमाह-'न तस्य प्राणा उत्क्रामन्ती'त्यस्मात्प्रतिषेधाद्विद्यावतो न गमनमिति चेत्तन्न । कुतः ? शारीरात् । जीवादयं गमनप्रतिषेधो न शरीरात् ॥ १२ ॥

एवं शङ्किते पुना राद्धान्तमाह—

## स्पष्टो ह्येकेषाम् ॥ १३ ॥

शरीरादात्मनः प्राणानां गमनम् । कुतः ? हि यस्मात् एकेषां शाखिनां शरीरस्यैव स्पष्टोऽपादानभावः श्रूयते 'स उच्छ्रयती'त्यादिना देहस्यैवापाऽदानतयोपलम्भात् ॥ २३ ॥

## स्मर्यते च ॥ १४ ॥

स्मर्यतेऽपि महाभारते गत्युत्क्रान्त्योरभावः 'सर्वभूतात्मे'त्यादिना ॥ १४ ॥

पूर्वाधिकरणे 'उच्छ्रयती'त्यादिना देहस्य प्रकृतत्वात्तदपादानोत्क्रान्तिप्रतिषेधः कृत,स्तद्वदत्रापि 'गताः कलाः पञ्चदश प्रतिष्ठा' इति वचनादिन्द्रियाणां भूतेषु लय इत्याक्षिप्य समाधत्ते—

## तानि परे तथा ह्याह ॥ १५ ॥

तानीन्द्रियाणि भूतानि च निर्गुणविद्यावतः परे परमात्मनि प्रलीयन्ते कुतः? हि यस्मात् तथाह श्रुतिः 'पुरुषं प्राप्याऽस्तं गच्छन्ती'ति ॥ १५ ॥

पूर्वाधिकरणे विदुष इन्द्रियाणां परस्मिन् प्रविलय उक्तः, स त्वनुपपन्नः, वृत्त्या ऽत्राप्युपपत्तेरित्याक्षिप्य समाधत्ते—

## अविभागो वचनात् ॥ १६ ॥

इन्द्रियाणां भूतानां च ब्रह्मणि प्रविलये ब्रह्मणा ऽविभाग ऐक्यं निर्गुणविद्यावतो वृत्तिमतामेषां प्रविलय इत्यर्थः । कुतः ? वचनात् 'भिद्येते चैषां नाम रूपे' इत्यादेः ॥ १६ ॥

व्यवहिताधिकरणे आसृत्युपक्रमाद्विदुषो ऽविदुषश्च समाना गतिरुक्ता, सा ऽनुपपन्ना, विदुषोऽप्यनियतनाडीगमनादित्याक्षिप्य समाधत्ते । अथ वा पूर्वाधिकारणे निर्गुणविद्यावतो ऽविभागेन परस्मिन्निन्द्रियप्रलय इत्युक्तः, तद्वत्सगुणविद्यावतो ऽपि स स्यादिति दृष्टान्तेनाक्षिप्य समाधत्ते—

## तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दाऽनुगृहीतः शताधिकया ॥ १७ ॥

तस्य विज्ञानात्मन ओक आयतनं हृदयं हृदयस्याऽग्रस्य ज्वलनेन प्रकाशितानि द्वाराणि यस्य सोयं तत्प्रकाशितद्वारः । सर्वोपि जन्तुश्चक्षुरादिभ्यः स्थानेभ्य उत्क्रामति, विद्वांस्तु हार्देन ब्रह्मणा ऽनुगृहीतः शताऽधिकमूर्धन्यया नाड्या । कुतः ? विद्यासामर्थ्यादुपासनासामर्थ्यात् । तत्सामर्थ्यादप्यनयैव गच्छतीति को नियम? इत्यत आह—तच्छेषगत्यनुस्मृतियोगाच्च । तस्या विद्यायाः शेषभूता मूर्धन्यनाडीगतिरुत्तरमार्ग इति यावत् । तस्या अनुस्मृतिरनुस्मरणं तस्य योगस्तस्मादपि । चकारः सामर्थ्यमनाक्षिप्याह ॥ १७ ॥

पूर्वाधिकरणे मूर्धन्यनाड्या सगुणविद्याविदुत्क्रामतीत्युक्तं, तद्दिवसे मृतस्यैव न रात्रौ, तत्र रश्मीनामभावादित्याक्षिप्य समाधत्ते—

## रश्म्यनुसारी ॥ १८ ॥

'अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते'एष दिवसे रात्रौ च रश्म्यनुसारी याति ॥ १८ ॥

निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वा-
द्दर्शयति च ॥ १९ ॥

निशि रात्रौ रश्म्यनुसारी न यातीति चेत्तन्न, रश्मिसंबन्धस्य यावद्देहभावित्वात्। 'अमुष्मा' दित्यादिना दर्शयति। चकारो दिनाच्च निशासु रश्मीनां स्पर्शोपलम्भमाह ॥ १९ ॥

पूर्वाधिकरणे रात्रौ रश्मीनां सद्भावेनोत्तरमार्गगमनमुक्तं, तद्दक्षिणायने मृतस्याऽनुपपन्नमित्याक्षिप्य समाधत्ते—

अतश्चाऽयने ऽपि दक्षिणे ॥ २० ॥

अतश्चाऽत एव तस्याऽनियतकालत्वात् अयने दक्षिणे ऽपि विद्वान् विद्याफलमाप्नोत्येव ॥ २० ॥

'यत्र काले' इत्यादिना दक्षिणायने मृतानां पुनरावृत्तिः स्मर्यत इत्यत आह—

योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥२१॥

योगिनः स्मार्तयोगविदस्तान् प्रति स्मर्यते कालविनियोगः स्मार्ते चैते योगसांख्ये। आद्यश्चकारो ब्रह्मविदः प्रत्यस्मरणमाह। द्वितीयस्तयोरश्रौतत्वमाह । आतिवाहिकाऽङ्गीकारेण कृत्वा चिन्त्येयम् ॥ २१ ॥

इति श्रीब्रह्मसूत्रदीपिकायां चतुर्थाऽध्यायस्य
द्वितीयः पादः ।

——:o:——

पूर्वपादे उत्क्रान्तिर्निरूपिता, इदानीमुत्क्रान्तस्य विदुषो ऽर्चिरादिका निरूप्यते—

अर्चिरादिना तत्प्रथितेः ॥ १ ॥

सर्वो ब्रह्म प्रेप्सुरर्चिरादिनैव मार्गेण रंहति। कुत.? तत्प्रथितेः। तस्य मार्गस्य विदुषां प्रथितेः प्रसिद्धेः 'ये चेमे ऽरण्ये' इत्यादिना॥ १ ॥

पूर्वाधिकरणे विदुषोऽर्चिरादिमार्गेण गमनमुक्तं, स मार्गो न नियतः, वायोरेतस्मिन्नश्रवणादित्याक्षिप्य समाधत्ते—

## वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

वायुमब्दात्संवत्सराद्देवलोकं प्राप्येति शेषः। कुतः ? अविशेषविशेषाभ्यां 'स वायुलक्षक'मित्यविशेषः, 'स वायुमागच्छती'त्युक्त्यनन्तरं तद्वत्तेन मार्गेण स आगच्छतीति विशेषमाह, ताभ्याम् ॥ २ ॥

पूर्वाधिकरणे वायोरब्दानन्तर्यमुक्तं, तथापि लोकादीनामर्चिरादिसन्निवेशानुपपत्तिस्तदवस्था, नियामकाऽभावादिति प्रत्युदाहरणेनाक्षिप्य समाधत्ते—

## तडितोऽधिवरुणः सम्बन्धात् ॥ ३ ॥

तडितो विद्युल्लोकादधि अनन्तरं वरुणलोकः वरुणस्य विद्युता सम्बन्धादिन्द्रप्रजापतिलोकयोर्वरुणादधि 'आगन्तुकानामन्ते निवेश' इति न्यायेन सन्निवेशः ॥ ३ ॥

पूर्वाधिकरणे ऽर्चिरादिमार्गे वरुणादीनां तडितो ऽधिसम्बन्ध उक्तः सूचितमार्गो ऽवस्थितस्तथापि तस्मिन्मार्गे ऽर्चिरादिभोगभूमिषु गन्तुं विद्वानेकाकी प्रभुस्ततो न नियतमार्गो ऽयमित्याक्षिप्य समाधत्ते—

## आतिवाहिकस्तल्लिङ्गात् ॥ ४ ॥

अतिवहन्तीत्यातिवाहिकाश्चेतना देवा अर्चिरादयः । कुतः ? तल्लिङ्गात्। तेषां चेतनानां 'तत्पुरुषो ऽमानव' इति एकीकरणेन लिङ्गात् ॥ ४ ॥

नन्वत्रैवाऽयं पुमान्नेता ऽस्त्वित्यत आह—

## उभयव्यामोहात्तत्सिद्धेः ॥ ५ ॥

उभयस्य नेतॄणां संपिण्डितकरणत्वेन स्थानानां स्वयमेव व्यामोहो ऽचेतनत्वं, तस्मान्नेतॄणां चेतनानां सिद्धिः। तस्मान्नात्रैव नेता इति शेषः ॥ ५ ॥

## वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥

वरुणादिलोके तेषां नेतॄणामभावात् पूर्वमपि चेतना न स्युरित्यत आह–वैद्युतेनैवाऽमानवेनैव तत्तस्मात् विद्युल्लोकादूर्ध्वं नीयते। कुतः? तच्छ्रुतेः। तस्याऽमानवस्य पुरुषस्य नेतृत्वस्य 'तान् वैद्युता'दित्यादिश्रुतेः॥ ६॥

पूर्वाधिकरणे आतिवाहिकैः सगुणविद्याविदो नीयन्ते इत्युक्तं, तदनुपपन्नं, एतस्य प्राप्यस्य ब्रह्मणः परत्वेन निर्गुणविद्याविदप्यत्रैव गच्छतीत्याक्षिप्य समाधत्ते—

## कार्यं बादरिरस्य गत्युपपत्तेः॥ ७॥

यदर्चिरादिना गच्छन्तीति, ब्रह्म तत्कार्यं बादरिराचार्यो मन्यते। कुतः? अस्य कार्यस्य गतेरर्चिरादिगमनस्य तत्रोपपत्तिः सम्भवो गत्युपपत्तिः। तस्याः॥ ७॥

ननु नाऽयं तर्कगम्यो ऽर्थ इत्यत आह—

## विशेषितत्वाच्च॥ ८॥

'ब्रह्मलोका'नित्यादिना। चकारस्तर्कस्य श्रुतिमूलस्य कर्तव्यतामाह॥ ८॥

ननु कार्यस्यापि ब्रह्मशब्दो नोपपद्यते इत्यत आह—

## सामीप्यात्तु तद्व्यपदेशः॥ ९॥

तुशब्दस्तत्र ब्रह्मशब्दाऽनुपपत्तिं वारयति। का तर्ह्यत्रोपपत्ति?-रित्यत आह–सामीप्यात्। कार्यस्य ब्रह्मणः परेण ब्रह्मणा। अतस्तस्य ब्रह्मशब्दस्य व्यपदेशात्॥ ९॥

ननु कार्यप्राप्तावनावृत्तिर्नोपपद्यतइत्यत आह—

## कार्यात्यये तदध्यक्षेण सहाऽतः परमभिधानात्॥ १०॥

कार्यस्य ब्रह्मलोकस्याऽत्यये विनाशे तस्य ब्रह्मलोकस्याऽध्यक्षेण परमेष्ठिना सहाऽतः परमेष्ठिनः परं ब्रह्म भवति। कुतः? अनावृत्त्याद्यभिधानात्॥ १०॥

न त्विदं विश्वास्यमेवेत्यत आह—

## स्मृतेश्च ॥ ११ ॥

ब्रह्मणा सहेत्यादद्याया: । चशब्दाच्छ्रुतेरपि 'ते ब्रह्मलोके' इत्यादद्याया: ॥ ११ ॥

पूर्वपक्षमाह—

## परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥

ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वात् यद् गम्यमर्चिरादिना तत्परमेवेति जैमिनिराचार्य आह ॥ १२ ॥

नन्वनुपपत्तेर्मुख्यार्थपरित्याग इत्यत आह—

## दर्शनाच्च ॥ १३ ॥

'तयोर्ध्वमायन्नमृतत्वमेती'त्यमृतत्वप्राप्तेः । चकारो मुख्यार्थाऽनुपपत्तेरभावमाह ॥ १३ ॥

'प्रजापतेः सभावेश्मे' त्यादिना स्पष्टं कार्यब्रह्माऽवगम्यते इत्यत आह—

## न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ १४ ॥

'वेश्म प्रपद्यते' इति प्रतिपत्तेरभिसन्धिः कार्ये ब्रह्मणि न च, नैव । नामरूपनिर्वाहकस्य ब्रह्मणः प्रकृतत्वात् ॥ १४ ॥

पूर्वाधिकरणे ऽर्चिरादिप्राप्यस्य ब्रह्मणः कार्यत्वमुक्तम्, एवं चेत्प्रतीकोपासकैरपि तद् गम्यमित्याक्षिप्य समाधत्ते—

## अप्रतीकावलम्बनान्नयतीति बादरायण उभयथा ऽदोषात्तत्क्रतुश्च ॥ १५ ॥

प्रतीकाऽवलम्बना ये न भवन्ति ते ऽप्रतीकाऽवलम्बनाः तान् प्रतीकव्यतिरिक्तानमानवपुरुषो नयतीति बादरायण आचार्यो मन्यते । न च नयने न्यायविरोध इत्यत आह-उभयथा ऽदोषात् । उभयथा प्रतीकालम्बनानां नयने ऽन्येषां नयने न्यायस्य प्रतीकावलम्बनव्यतिरिक्तविषयत्वेनाऽदोषात् । अत्र को हेतु?रित्यत आह-तत्क्रतुश्च । तस्य ब्रह्मणः क्रतुः संकल्पः तत्क्रतुर्ब्रह्मप्राप्तौ हेतुः । चशब्दस्तद्भावप्राप्तौ ॥ १५ ॥

ननु प्रतीकोपासनानां फलाऽभावात् ब्रह्मलोक एव फलं कल्प्यमित्यत आह—

विशेषं च दर्शयति ॥ १६ ॥

'यावन्नाम्नो गत'मित्यादिना प्रतीकोपासनेषु फलस्य । चकारोऽश्रुतफलेषु ब्रह्मलोकः फलं कल्प्यामिति कल्पनाऽभावमाह ॥ १६ ॥

इति ब्रह्मसूत्रदीपिकायां चतुर्थाऽध्यायस्य तृतीयः पादः ।

———o———

पूर्वपादे सगुणविद्याविदोऽर्चिरादिगतिः कार्यब्रह्मप्राप्तिश्च फलमुक्त,मिदानीं निर्गुणविद्याविदस्तत्संपत्तिरुच्यते—

संपद्याविर्भावः स्वेन शब्दात् ॥ १ ॥

परं ज्योतिरुपसंपद्य स्वेन केवलेनैवात्मना ऽऽविर्भवति । कुतः ? 'स्वेन रूपेणाऽभिनिष्पद्यते' इति स्वशब्दात् । कः पुनर्विशेषः पूर्वोत्तरयोः स्वरूपयोः? रित्यत आह—

मुक्तः प्रतिज्ञानात् ॥ २ ॥

यो ऽत्राऽभिनिष्पद्यतइत्युक्तः स सर्वसम्बन्धविनिर्मुक्तः । कुतः ? 'य आत्मे' त्यादिना तादृशस्यैव प्रतिज्ञानात् ॥ २ ॥

'परं ज्योतिरुपसंपद्ये'ति ज्योतिषि सम्पत्तेः कथमात्मरूपेणाऽऽविर्भाव? इत्यत आह—

आत्मा प्रकरणात् ॥ ३ ॥

ज्योतिःशब्देनाऽऽत्मा ऽभिधीयते । कुतः ? प्रकरणात् । 'य आत्मे'त्यादेः ॥ ३ ॥

पूर्वाधिकरणे स्वेन सता संपत्तिरुक्ता, सा सुषुप्तिवत्स्यादित्याक्षिप्य समाधत्ते—

अविभागेन दृष्टत्वात् ॥ ४ ॥

परं ज्योतिरुपसंपद्य स्वेन रूपेणाऽभिनिष्पद्यते यः स त्वविभागेन । कुतः ? 'तत्त्वमसी'त्यादेर्दृष्टत्वात् ॥ ४ ॥

पूर्वाधिकरणे अविभागेन ब्रह्मसंपत्तिरुक्ता, तद्ब्रह्म स्वभावेन सवि-शेषमित्याचिपति—

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥

ब्राह्मेण स्वेन रूपेणाऽपहतपाप्मत्वादिना सर्वज्ञत्वादिना च निः-ष्पद्यते इति जैमिनिराचार्यो मन्यते । कुतः ? उपन्यासादिभ्यः । उप-न्यासो 'ऽयमात्मे' त्यादिशब्देन 'स तत्र पर्यैती'त्यैश्वर्यादिभ्यः ॥ ५ ॥

## चितितन्मात्रेण तदात्मकत्वादित्यौडु-लोमिः ॥ ६ ॥

चिन्मात्रेण चैतन्यमेवाऽऽत्मनो रूपमतश्चैतन्यमात्रेणैवाऽभि-निष्पद्यते । तदेव कुत ? इत्यत आह-'एवं वा अरं' इत्यादिना तदा-त्मकत्वात् चैतन्यमात्रात्मकत्वात् । आत्मनो वस्तुतः सत्यसङ्कल्प-त्वादीनामुपाधिधर्मत्वादित्यौडुलोमिराचार्यो मन्यते ॥ ६ ॥

## एवमप्युपन्यासात्पूर्वभावादविरोधं बादरा-यणः ॥ ७ ॥

एवमपि पारमार्थिकचैतन्यरूपेण स्वरूपाऽभ्युपगमे ऽपि पूर्वस्या-ऽप्युपन्यासादिभ्यो ऽवगतस्य ब्राह्मस्यैश्वर्यरूपस्य भावाद्व्याख्या-नादप्यविरोधं बादरायण आचार्यो मन्यते, बादरायणमतं सिद्धा-न्तः ॥ ७ ॥

पूर्वाधिकरणे ब्रह्मणि विशेषाऽसम्भवात्सविशेषप्रकृतावपि सवि-शेषत्वश्रुतिरौपाधिकविशेषे व्यवस्थापिता, नैवं योगी सङ्कल्पाऽतिरि-क्तसाधनवानिति प्रत्युदाहरणेनाक्षिप्य समाधत्ते—

## संकल्पादेव तच्छ्रुतेः ॥ ८ ॥

पित्रादयः सङ्कल्पादेव समुत्तिष्ठन्ति न तु निमित्तान्तरात् । कुतः ? तस्य 'सङ्कल्पादेवाऽस्य पितरः समुत्तिष्ठन्ती'ति तादृशस्य समुत्थानस्य श्रुतेः ॥ ८ ॥

## अत एव चाऽनन्याधिपतिः ॥ ९ ॥

अत एव सत्यसङ्कल्पत्वादेवाऽनन्याऽधिपतिश्च । अस्य नाऽन्योऽधिपतिरपि ॥ ९ ॥

पूर्वाधिकरणे संकल्पाऽतिरिक्तसाधनानां सगुणविद्याविदो योगिनो ऽसाधनत्वमुक्तं तच्छ्रुतेः । नैवमत्र श्रुतिरस्ति, अतो ऽपि मनोऽतिरिक्तानां साधनानामसत्त्वमेवेति प्रत्युदाहरणेनाक्षिप्य पक्षान्तर माह—

## अभावं बादरिराह ह्येवम् ॥ १० ॥

मनोऽतिरिक्तानां शरीरेन्द्रियादीनामभावं बादरिराचार्यो मन्यते । कुतः ? हि यस्मात् एवमाह श्रुतिः 'स एवैतानी'त्यादिना ॥ १० ॥

## भावं जैमिनिर्विकल्पाऽऽमननात् ॥ ११ ॥

जैमिनिराचार्यो मनोवच्छरीरस्यापि सेन्द्रियस्य भावं मुक्तं प्रति मन्यते । कुतः ? 'स एकधा भवती'त्यादिना विकल्पस्याऽऽमननात् ॥ ११ ॥

## द्वादशाहवदुभयविधं बादरायणो ऽतः ॥१२॥

बादरायणो मुनिराचार्यो ऽत एव लिङ्गदर्शनादुभयविधं मन्यते भावमभावं द्वादशाहवत् । यथा द्वादशाहः सत्रमहीनश्च तद्वत् । अतः सिद्धान्तः ॥ १२ ॥

ननु शरीराऽभावे सुषुप्तिवन्न विषयोपलम्भ इत्यत आह—

## तन्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥

शरीराऽभावे सन्ध्ये यथोपलब्धिमात्राः पित्रादिकामा भवन्ति एवं मोक्षे ऽपि स्युः, तथा सत्युपपत्तेः ॥ १३ ॥

## भावे जाग्रद्वत् ॥ १४ ॥

पूर्वाधिकरणे 'स एकधा भवति त्रिधा भवती'ति वाक्योदाहरणेनाऽनेकशरीरग्रहणमुक्तं, तत् क्रमेण न युगपदित्याक्षिप्य समाधत्ते—

## प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥

'शरीरान्तराणां स्वीकारे शरीरान्तरात् शरीरान्तरेष्वावेशः प्रदीपवत् । यथैकस्य प्रदीपस्य प्रदीपसहस्रेषु आवेशः तद्वत् । कुत

एतत्? हि यस्मात् तथा दर्शयति श्रुतिः 'स एकधा भवती'त्यादिना ॥ १५ ॥

स्वाप्ययसंपत्त्योरन्यतराऽपेक्षमाविष्कृतं हि ॥ १६ ॥

स्वाप्ययः सुषुप्तिः संपत्तिस्तयोरन्यतरापेक्षं 'यत्र त्वस्ये'त्यादि प्रतिषेधवचनम् । कुतः? हि यस्मात् सुषुप्तौ मुक्तौ वा इदमाविष्कृतमुदाहृतम् ॥ १६ ॥

पूर्वाधिकरणे शरीरेन्द्रियाणां कर्तृत्वमुक्तं योगिनः, तद्वज्जगद्व्यापारकर्तृत्वमपीति दृष्टान्तेनाक्षिप्य समाधत्ते—

जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥

योगिनां भौतिकेष्वेव स्वातन्त्र्यं न भूतेष्वित्याह-जगद्व्यापारवर्जम् । कुतः? प्रकरणात् । सर्वभूतसृष्टिवाक्येषु परमात्मनः प्रकृतत्वात् । न च तेऽपि परमात्मवत् प्रकृता इत्याह-असन्निहितत्वाद्योगिनाम् । चकारो महाभूतसृष्टौ योगिनामशक्यत्वमप्याह ॥ १७ ॥

प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥

प्रत्यक्षोपदेशात् 'आप्नोति स्वाराज्य'मित्यादेर्योगिनां जगद्व्यापारस्वातन्त्र्यमिति चेन्न । कुतः? आधिकारिको य आदित्यमण्डलस्थस्तस्योक्तेः ॥ १८ ॥

ननूपाधिव्यतिरिक्तस्य ब्रह्मणोऽसत्त्वे कुतोऽयं विभाग? इत्यत आह—

विकारावर्ति च तथा हि स्थितिमाह ॥ १९ ॥

विकारावर्त्यपि नित्यमुक्तं परमेश्वरं न केवलविकारमात्रगोचरं सावित्रमण्डलाद्यधिष्ठानम् । तथा हि यस्मात् स्थितिमाह आम्नायः 'एतावानस्य महिमे'त्यादिना ॥ १९ ॥

नन्वत्र पादत्रयमुपलभ्यते न त्वन्यत्किञ्चिदित्यत आह—

**दर्शयतश्चैवं प्रत्यक्षाऽनुमाने ॥ २१ ॥**

एवं विकारावर्ति रूपं श्रुतिस्मृती दर्शयतः । श्रुति'र्न तत्र सूर्य' इत्याद्या । स्मृति'र्न जायते, इत्याद्या । चकारो मुक्तेरपि सत्त्वमाह॥२०॥

ननु परमेश्वरस्य जगत्कर्तृत्वमुक्तं, तत्समानशीलाश्च योगिन इत्यत आह—

**भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥**

अनादिसिद्धेन परमेश्वरेण भोगमात्रं समानं योगिनां यथैतदेवलिङ्गं योगिनां जगद्व्यापाराऽभावे । चकारादनेकेश्वरादिदोषश्च ॥२१

नन्वेवं सति साऽतिशयत्वात् अन्तवत्त्वमैश्वर्यस्य स्यात्ततश्चैवमावृत्तिरिति चेत्—

**अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥२२॥**

ब्रह्मलोकप्राप्तानां तेषां न पुनरावृत्तिः । कुतः? 'न स पुनरावर्तते' इत्यादेः शब्दात् । सूत्राऽभ्यासः शास्त्रसमाप्तिं द्योतयति ॥ २२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याऽऽनन्दात्मपज्यपाद-
शिष्यस्य परमहंसपरिव्राजकाचार्यश्रीमच्छङ्करानन्द-
भगवतः कतौ ब्रह्मसूत्रदीपिकाया चतुर्था-
ऽध्यायस्य चतुर्थः पादः ॥
संपर्णश्च चतुर्थो ऽध्यायः ।
समाप्तश्चायं ग्रन्थः ॥

शुभम ।

——:o:——

# BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH, M. A., C. I. E.

AND

G. THIBAUT, PH. D.

*Nos. 91 & 112.*


---

# ब्रह्मसूत्रदीपिका

श्रीमच्छङ्करानन्दभगवद्भिरचिता ।

तथा—

## तत्त्वानुसन्धानं नाम वेदान्तप्रकरणम्

प. प. श्रीमन्महादेवानन्दसरस्वतीरचितम् ।

## BRAHMASÛTRADÎPIKÂ

BY ŜRÎ ŜANKARÂNANDA,

AND TATTVÂNUSANDHÂNA

BY ŜRÎ MAHÂDEVÂNANDASARASWATÎ,


EDITED BY

Râma Ŝâstrî Tailanga,

PROFESSOR, GOVT. SANSKRIT COLLEGE, BENARES.



BENARES:

*Published by the Proprietors Messrs. Braj B. Das & Co.,*

AND SOLD BY H. D. GUPTA,

*Secretary, Chowkhamba Sanskrit Book Depôt.*

Printed at the Vidyâ Vilâs Press & Tara Printing Works,

BENARES.

1906.

# तत्त्वाऽनुसन्धानं नाम वेदान्तप्रकरणम् ।

श्रीगणेशाय नमः ।

ब्रह्माहं यत्प्रसादेन मयि विश्वं प्रकल्पितम् ।
श्रीमत्स्वयंप्रकाशाख्यं प्रणौमि जगतां गुरुम् ॥ १ ॥

देहो नाहं श्रोत्रवागादिको नि
नाहं बुद्धिर्नाऽहमध्यासमूलम् ।
नाहं सत्याऽऽनन्दरूपश्चिदात्मा
मायासाक्षी कृष्ण एवाऽहमस्मि ॥ २ ॥

अथ मोक्षस्य वाक्यार्थज्ञानाऽधीनत्वात्तदर्थं तत्पदार्थं निरूपयामः । तत्पदार्थस्य लक्षणं द्विविधम् । तटस्थलक्षणं स्वरूपलक्षणञ्चेति । सृष्टिस्थितिलयकारणत्वं तटस्थलक्षणम् । "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ती"ति श्रुतेः । तदुक्तं भगवता सूत्रकारेण "जन्माद्यस्य यत" इति । सत्यज्ञानाऽऽनन्दाः स्वरूपलक्षणम् । "सत्यं ज्ञानमनन्तं ब्रह्म" "आनन्दो ब्रह्मेति व्यजानात्" इत्यादिश्रुतेः । उक्तं च "आनन्दादयः प्रधानस्ये"ति ।

सं च द्विविधः । वाच्यार्थो लक्ष्यार्थश्चेति । मायोपहितं चैतन्यं तत्पदवाच्यार्थः । मायाविनिर्मुक्तं चैतन्यं तत्पदलक्ष्यार्थः ।

अथ केयं माया ? शृणु । यथा शुक्त्यादौ रजतादि कल्पितं तथा चेतने ऽचेतनं कल्पितम् । "इदं सर्वं यदयमात्मा" "आत्मैवेदं सर्वम्" "ब्रह्मैवेदं सर्वम्" "पुरुष एवेदं विश्वम्" "सर्वं खल्वि-

दं ब्रह्म" "वासुदेवः सर्वम्" "नारायणः सर्वमिदम् पुराण" इत्यादिश्रुतिस्मृतिवाक्यशतैरचेतनस्य चेतनव्यतिरेकेणाऽभावप्रतिपादनात्। चेतनाचेतनयोरभेदायोगाच्च। चेतनं नित्यशुद्धबुद्धमुक्तसत्यपरमानन्दाऽद्वयं ब्रह्म। अचेतनमज्ञानादिजडजातम्। अज्ञानं त्रिगुणात्मकं सदसद्भ्यामनिर्वचनीयम् भावरूपं ज्ञाननिवर्त्यम्। अहं ब्रह्म न जानामीत्यनुभवात्। "देवात्मशक्तिं स्वगुणैर्निगूढा" मित्यादिश्रुतेः। "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः" "ज्ञानेन तु तदज्ञानं येषां नाशितमात्मन" इति स्मृतेश्च।

तच्चाऽज्ञानं द्विविधं मायाऽविद्याभेदात्। शुद्धसत्त्वप्रधानं तन्मायेत्युच्यते। मलिनसत्त्वप्रधानंअविद्येत्युच्यते। "जीवेशावाभासेन करोति माया चाऽविद्या च स्वयमेव भवती" ति श्रुतेः।

अथ वा ऽज्ञानस्य शक्तिर्द्विविधा, ज्ञानशक्तिः क्रियाशक्तिश्चेति। रजस्तमोभ्यामनभिभूतसत्त्वं ज्ञानशक्तिः। "सत्त्वात्संजायते ज्ञानमिति स्मृतेः। क्रियाशक्तिर्द्विविधा, आवरणशक्तिर्विक्षेपशक्तिश्चेति। रजस्सत्त्वाभ्यामनभिभूतं तम आवरणशक्तिः। तदुक्तम्! " कृष्णं तम आवरणात्मकत्वात्" इति। सा च नास्ति न प्रकाशते इति व्यवहारहेतुः। तथा चोक्तम्। "न भाति नास्ति कूटस्थ इत्यापादनमावृति"रिति। तमःसत्त्वाभ्यामनभिभूतं रजो विक्षेपशक्तिः। "रजसो लोभ एव चेति" स्मृतेः। लोभादीनां विक्षेपकत्वं प्रसिद्धमेव। सा चाकाशादिप्रपञ्चोत्पत्तिहेतुः। उक्तं च। "विक्षेपशक्तिर्लिङ्गादि ब्रह्माण्डान्तं जगत् सृजे" दिति। तथा च पूर्वोक्ताऽज्ञानमावरणशक्तिप्रधानं सदविद्येत्युच्यते। अज्ञानं विक्षेपशक्तिप्रधानं सन्मायेत्युच्यते। एतदभिप्राया स्मृतिरपि।

" तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते ।
योगी मायाममेयाय तस्मै विद्यात्मने नमः " ॥

इत्येवंरूपा द्रष्टव्या ।

एवं च मायोपहितचैतन्यमीश्वरो जगत्कारणमन्तर्यामीत्युच्यते । स एव तत्पदवाच्यार्थः । अविद्योपहितं चैतन्यं जीवः प्राज्ञ इत्युच्यते । तदुक्तम् ।

" तमोरजःसत्त्वगुणा प्रकृतिर्द्विविधा च सा ।
सत्त्वशुद्ध्यविशुद्धिभ्यां मायाविद्ये च ते मते ॥
मायां बिम्बो वशी कृत्य तां स्यात् सर्वज्ञ ईश्वरः ॥
अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधा " इति ।

" अस्माद् मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः " " मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् "-मित्येवमादिश्रुतय उक्ताभिप्राया द्रष्टव्याः ।

यद्वा यथा एक एव देवदत्तः क्रियानिमित्तवशेन पाचको याचक इति व्यपदिश्यते तथा एकमेवाऽज्ञानं विक्षेपाऽऽवरण-शक्तिनिमित्तभेदेन माया ऽविद्येति च व्यपदिश्यते । तथा चाऽऽविद्याप्रतिबिम्बितं चैतन्यं जीवः । अविद्योपहितं बिम्बचैतन्यमीश्वरः । " आभास एव च " " अत एव चोपमा सूर्यकादिवत् " " यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् , उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा " " एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् " दित्यादिश्रुतिसूत्रयोः सत्त्वात् ॥ अस्मिन्पक्षे जीवस्त्वेक एव, तस्मिन्नन्तःकरणविशिष्टाः प्रमातारः कल्पिताः ।

केचित्तु नानाऽज्ञानं स्वीकृत्य वनवदज्ञानसमुदायः समष्टिस्तदुपहितं चैतन्यमीश्वरः। वृक्षवत्प्रत्येकमज्ञानं व्यष्टिस्तदुपहितचैतन्यं प्राज्ञ इति वदन्ति।

अन्ये तु कारणीभूताऽज्ञानोपहितं चैतन्यमीश्वरः, अन्तःकरणोपहितं चैतन्यं जीवः। "कार्योपाधिरयं जीवः कारणोपाधिरीश्वर" इति वचनादित्याहुः।

सर्वथा मायोपहितचैतन्यमीश्वरः। स च ज्ञानशक्त्युपहितस्वरूपेण जगत्कर्त्ता, विक्षेपादिशक्तिमदज्ञानोपहितस्वरूपेण जगदुपादानम्, ऊर्णनाभिवत्। "यथोर्णनाभिः सृजते गृह्णीते च" इत्यादिश्रुतेः। "यः सर्वज्ञः स सर्ववित् स सर्वस्य कर्त्ता"-इत्यादिश्रुतिभ्यश्च।

एवं पूर्वोक्तादीश्वरादाकाश उत्पद्यते। "आकाशाद्वायुः, वायोरग्निः,अग्नेरापः, अद्भ्यः पृथिवी च" "तस्माद्वा एतस्मादात्मन आकाशः संभूत" इत्यादिश्रुतेः। मायायाः सत्त्वरजस्तमोगुणात्मकत्वात्तत्कार्याण्याकाशादीन्यपि सत्त्वरजस्तमोगुणात्मकान्यपञ्चीकृतानि सूक्ष्मभूतानि, इति च वर्णयन्ति।

एतेभ्यः सूक्ष्मभूतेभ्यः स्थूलभूतानि सूक्ष्मशरीराणि च सप्तदशलिङ्गात्मकानि जायन्ते।

सप्तदशलिङ्गानि तु ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनो बुद्धिः पञ्च प्राणाश्चेति।

तथा च आकाशादिसात्त्विकांशेभ्यो व्यस्तेभ्यो ज्ञानेन्द्रियाण्युत्पद्यन्ते। आकाशसात्त्विकांशाच्छ्रोत्रमुत्पद्यते। वायोः सात्त्विकांशात्त्वगिन्द्रियम्। तेजसः सात्त्विकांशाच्चक्षुः। अपां सात्त्विकांशाद्रसनम्। पृथ्वीसात्त्विकांशाद् घ्राणम्। "श्रोत्रमाकाश" इत्यादिश्रुतेः।

आकाशादीनां सात्त्विकांशेभ्यो मिलितेभ्यो ऽन्तःकरण-मुत्पद्यते ।

तत् संकल्पविकल्पनिश्चयाऽभिमानाऽनुसंधानरूपवृत्तिभे-दाच्चतुर्विधम् ।

"मनो बुद्धिरहंकारश्चित्तं चेति चतुर्विधम् ।
संकल्पाख्यं मनोरूपं बुद्धिर्निश्चयरूपिणी ॥
अभिमानात्मकस्तद्वदहंकारः प्रकीर्त्तितः ।
अनुसंधानरूपं च चित्तमित्यभिधीयते" ॥

इति वार्त्तिकवचनात् ।

पूर्वोक्ताकाशादिरजोंशेभ्यो व्यस्तेभ्यः कर्मेन्द्रियाण्युत्प-द्यन्ते । आकाशराजसांशाद्वागिन्द्रियमुत्पद्यते । वायोः राजसां-शाद्धस्तौ । तेजसो राजसांशात् पादौ । अपां राजसांशादुपस्थः । पृथिवीराजसांशात्पायुः ।

आकाशादिराजसांशेभ्यो मिलितेभ्यः प्राण उत्पद्यते । सो ऽपि वृत्तिभेदात्पञ्चविधः । प्राग्गमनवान्नासाग्रस्थानवर्त्ती प्राणः । अवाग्गमनवान् पाय्वादिस्थानवर्त्ती अपानः । विष्वग्गमनवा-न् सर्वशरीरवर्त्ती व्यानः । ऊर्ध्वगमनवान् कण्ठवर्त्ती उदानः । अशितपीतान्नपानादिसमीकरणकरो ऽखिलशरीरवर्त्ती समानः । "वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाणि तेषां क्रमेणे"-त्यादिश्रुतेः ।

अन्नमय,प्राणमय,मनोमय,विज्ञानमया.ऽऽनन्दमयाः कोशाः पञ्चाऽत्रैवान्तर्भवन्ति । वक्ष्यमाणं स्थूलशरीरमन्नमयकोशः । उक्तं सूक्ष्मशरीरं कोशत्रयात्मकम् । कर्मेन्द्रियैः सहितः प्राणः प्राण-मयकोशः । कर्मेन्द्रियैः सहितं मनो मनोमयकोशः । ज्ञानेन्द्रियैः सहिता बुद्धिर्विज्ञानमयकोशः ।

अयमेव कर्तृत्वोपाधिः । "विज्ञानं यज्ञं तनुते कर्माणि तनुते ऽपि च" इत्यादिश्रुतेः ॥

अन्तःकरणस्य सत्त्ववृत्तिर्द्विविधा। निश्चयवृत्तिः, सुखाकारवृत्तिश्चेति । निश्चयवृत्तिमदन्तःकरणं बुद्धिरित्युच्यते । सुखाकारवृत्तिमदन्तःकरणं भोक्तृत्वोपाधिः । "तस्य प्रियमेव शिरो, मोदो दक्षिणः पक्षः, प्रमोद उत्तरः पक्षः, आनन्द आत्मा, ब्रह्मपुच्छं प्रतिष्ठे" इत्यादिश्रुतेः । अयमेव कारणपर्यन्त आनन्दमयकोशः ।

के चित्तु अज्ञानम् आनन्दमयकोशं वदन्ति ।

इदं सूक्ष्मशरीरं सप्तदशलिङ्गं द्विविधम् । समष्टिव्यष्टिभेदात् । अपञ्चीकृतपञ्चमहाभूततत्कार्यसप्तदशलिङ्गं समष्टिरित्युच्यते । एतदुपहितं चैतन्यं हिरण्यगर्भ इत्युच्यते, प्राणः सूत्रात्मेति च । ज्ञानक्रियाशक्तिमदुपहितत्वाद् व्यापित्वाच्च । अथ वा पूर्वोक्ताऽपञ्चीकृतभूतेभ्यः सर्वव्यापकं लिङ्गशरीरं पृथगेवोत्पन्नं, तदेव समष्टिरित्युच्यते ।

समष्टित्वं नाम जात्यादिवत्सर्वत्र व्यष्टिष्वनुस्यूतत्वम् । तदुक्तम् । "तेभ्यः समभवत्सूत्रं लिङ्गं सर्वात्मकं महत्" इति ।

के चित्तु वनवल्लिङ्गशरीरसमुदायः समष्टिरिति वदन्ति ।

प्रत्येकं लिङ्गशरीरं व्यष्टिरित्युच्यते ।

व्यष्टित्वं नाम व्यक्तिवद्व्यावृत्तत्वम् । एतदुपहितं चैतन्यं तैजस इत्युच्यते । तेजोमयान्तःकरणोपहितत्वात् । सामान्यविशेषयोरिव जातिव्यक्त्योरिव च समष्टिव्यष्ट्योस्तादात्म्याभ्युपगमात् तदुपहितयोस्तैजससूत्रात्मनोरपि तादात्म्यम् ।

एतदेव सूक्ष्मशरीरमविद्याकामकर्मसहितं पुर्य्यष्टकमित्युच्यते । ज्ञानेन्द्रियपञ्चकं, कर्मेन्द्रियपञ्चकम्, अन्तःकरणचतुष्टयम्,

प्राणादिपञ्चकम्, भूतसूक्ष्मपञ्चकम्, अविद्या, कामः, कर्म, चेत्येतान्यष्टौ ।

तत्र कार्याविद्या द्रष्टव्या । सा चतुर्विधा । अनित्ये नित्यत्वबुद्धिः, अशुचौ शुचित्वबुद्धिः, असुखे सुखबुद्धिः, अनात्मन्यात्मबुद्धिश्चेति । तदुक्तम् । "अनित्याऽशुचिदुःखाऽनात्मसु नित्यशुचिसुखात्मख्यातिरविद्ये"ति । अस्यार्थः—अनित्ये ब्रह्मलोकादिसंसारसुखादिफले नित्यत्वबुद्धिरेका अविद्या द्रष्टव्या । अशुचिषु स्वशरीरपुत्रभार्यादिशरीरेषु शुचित्वबुद्धिरपरा । दुःखेषु दुःखसाधनेषु च सुखतत्साधनबुद्धिरन्या । अनात्मनि देहेन्द्रियादावहमित्यात्मबुद्धिरितरा चेत्यविद्या चतुर्विधेति । कामो रागः ।

कर्म त्रिविधम् । सञ्चित,मागामि,प्रारब्धञ्चेति । स्वकृतं फलमदत्वा ऽदृष्टरूपेण विद्यमानं साञ्चितं कर्म । यथा सन्ध्यावन्दनाऽग्निहोत्रादि । आगामि अस्मिन् शरीरे क्रियमाणं कर्म । वर्त्तमानशरीराऽऽरम्भकं प्रारब्धं कर्म ।

सञ्चिताऽऽगामिकर्मणोः फलभोगेन वा विरोधिकर्मान्तरेण वा ब्रह्मज्ञानेन वा विनाशः । प्रारब्धस्य तु भोगेनैव विनाशः । किं बहुना प्रारब्धव्यतिरिक्तानामविद्यादीनां पञ्चक्लेशानां तत्त्वज्ञानान्नाशः । तथा हि—अविद्याऽस्मितारागद्वेषाऽभिनिवेशाः पञ्च क्लेशाः । कार्यकारणरूपा द्विविधा ऽविद्या निरूपिता । अहंकारस्य सूक्ष्मावस्था ऽस्मिता । इदमेव महत्तत्त्वं सामान्याऽहंकार इति चोच्यते । राग उक्तः । द्वेषः क्रोधः । स्वीकृतस्य पुनस्त्यागाऽसहिष्णुत्वमभिनिवेशः । एतेषां पञ्चानां ब्रह्मसाक्षात्कारान्निवृत्तिः । "ज्ञात्वा देवं मुच्यते सर्वपाशै"रित्यादिश्रुतेः । पाशैः पञ्चक्लेशैरित्यर्थः । तिष्ठतु तावत्प्रासङ्गिकम् । एवं सूक्ष्मशरीरोत्पत्तिर्निरूपिता ।

पञ्चीकृतभूतानि स्थूलभूतानि ।

पञ्चीकरणं तु पूर्वोक्तानामाकाशादीनां तामसांशान् एकैकं द्विधा समं विभज्य तत्रैकं चतुर्धा विभज्य स्वांशं परित्यज्य इतरांशेषु योजनम् । तेषां पृथ्वी मलमांसमनः, जलं मूत्रलोहितप्राणाः, तेजो ऽस्थिमज्जावाक् "त्रिवृतं त्रिवृतमेकैकं करवाणी"ति त्रिवृत्करणश्रुतेः पञ्चीकरणस्याप्युपलक्षणत्वात् पञ्चीकरणं प्रामाणिकमेव । "वैशिष्ट्यात्तु तद्वादस्तद्वाद" इति न्यायेन स्वांशभूयस्त्वाद्विशेषव्यपदेशोपि संभवति । एवं च सति आकाशे शब्दो ऽभिव्यज्यते । वायौ शब्दस्पर्शौ । तेजसि शब्दस्पर्शरूपाणि । जले शब्दस्पर्शरूपरसाः । पृथिव्यां शब्दस्पर्शरूपरसगन्धाश्च । तथा पञ्चीकृतपृथिव्या ब्रह्माण्डमुत्पन्नं तदन्तर्वर्त्तिलोकाश्चतुर्दश । ब्रह्माण्डान्मनुशतरूपे जाते । ब्रह्माण्डान्तर्वर्त्तिपृथिव्या ओषध्य उत्पन्नाः । ओषधिभ्यो ऽन्नम् । पितृभ्यां भुक्तान्नपरिणामरेतःशोणितद्वारा स्थूलशरीरमुत्पन्नम् । तच्चतुर्विधम् । जरायुज, मण्डजं, स्वेदज, मुद्भिज्जं चेति मनुष्यादिशरीरं जरायुजम् । पक्षिपन्नगादिशरीरमण्डजम् । यूकामशकादिशरीरं स्वेदजम् । तृणगुल्मादिशरीरमुद्भिज्जम् ।

उक्तं स्थूलशरीरं पुनः प्रकारान्तरेण द्विविधम् । समष्टिव्यष्टिभेदात् । पञ्चीकृतपञ्चमहाभूततत्कार्यं ब्रह्माण्डं तदन्तर्वर्त्तिकार्यं सर्वं समष्टिरित्युच्यते । अथ वा व्यक्तिषु गोत्वादिवत्सर्वव्यष्टिष्वनुस्यूतं पञ्चीकृतभूतकार्यं ब्रह्माण्डात्मकं व्यापकं समष्टिः, वनवत् । सकलस्थूलशरीरसमुदायो वा समष्टिरित्युच्यते । एतदुपहितं चैतन्यं विराट् वैश्वानर इत्युच्यते, विविधं राजमानत्वात् सर्वनराभिमानित्वाच्च । प्रत्येकं स्थूलशरीरं गवादिव्यक्तिवद्वृक्षवत् व्यष्टिरित्युच्यते । एतदुपहितं चैतन्यं विश्व इत्युच्यते । सूक्ष्मशरीरमपरित्यज्य स्थूलशरीरप्रविष्टत्वात् । अनयोः समष्टिव्य-

ष्ट्योः सामान्यविशेषयोरिव तादात्म्याऽभ्युपगमात् एतदुपहित-विश्ववैश्वानरयोरपि तादात्म्यम् ।

एक एव जीवो जाग्रदवस्थायां स्थूलसूक्ष्मकारणाऽविद्याभिमानी सन् विश्व इत्युच्यते । स एव स्वप्नावस्थायां सूक्ष्मशरीरकारणाऽविद्याऽभिमानी सन् तैजस इत्युच्यते । स एव सुषुप्तौ कारणाऽविद्याभिमानी सन्प्राज्ञ इत्युच्यते । स एव शरीरत्रयाऽभिमानरहितः सन् शुद्धः परमात्मा भवति ।

तस्यैवाभिमानिनो जीवस्याऽवस्थाः पञ्च । जाग्रत्स्वप्नसुषुप्तिमूर्च्छामरणभेदात् । दिगाद्यधिष्ठातृदेवताऽनुगृहीतैरिन्द्रियैः शब्दादिविषयाऽनुभवाऽवस्था जाग्रदवस्था । जाग्रद्भोगप्रदकर्मोपरमे सति इन्द्रियोपरमे जाग्रदनुभवजन्यसंस्कारोद्भूतविषयतज्ज्ञानाऽवस्था स्वप्नावस्था । जाग्रत्स्वप्नोभयभोगप्रदकर्मोपरमे सति स्थूलसूक्ष्मशरीराभिमाननिवृत्तिद्वारा विशेषविज्ञानोपरमात्मिका बुद्धेः कारणात्मना ऽवस्थितिः सुषुप्तिः । मुद्गरप्रहारादिजनितविषादेन विशेषविज्ञानोपरमाऽवस्था मूर्च्छावस्था । तदुक्तम् । "मुग्धेर्द्धसंपत्तिः परिशेषा"दिति । एतच्छरीरभोगप्रापककर्मोपरमेण द्विविधदेहाभिमाननिवृत्त्या संपिण्डितकरणग्रामाऽवस्था भाविशरीरप्राप्तिपर्यन्तं मरणावस्था ।

केचित्तु अस्या उक्तावस्थास्वन्तर्भावं वदन्ति । अत्र श्रुतिस्मृतिपुराणानि प्रमाणानि प्रसिद्धानि ।

एक एव परमात्मा समष्टिस्थूलसूक्ष्मशरीरतत्कारणमायोपहितः सन् वैश्वानर इत्युच्यते । अहमेव वैश्वानरो ऽस्मीत्येतदुपासनया तत्प्राप्तिः फलं भवति । वैश्वानराधिकरणे सूत्रकारभाष्यकाराभ्यां श्रुत्यर्थस्य तथा प्रतिपादनात् । स एव परमात्मा समष्टिसूक्ष्मशरीरतत्कारणमायोपहितः सन् हिरण्यगर्भ इत्युच्य-

ते । एतदुपासनया तत्प्राप्तिः फलं भवति। "अन्तर उपपत्ते"रित्यस्मिन्नधिकरणे सूत्रकारभाष्यकाराभ्याम् उपकोशलविद्यायां तथैव प्रतिपादनात् । स एव केवलमायोपाधिकः सन्नीश्वर इत्युच्यते । तदुपासनया तत्प्राप्तिः फलं भवति । "सर्वत्र प्रसिद्धोपदेशा"दिति शाण्डिल्यविद्यायां "दहर उत्तरेभ्य" इति दहरविद्यायां च सूत्रकारभाष्यकाराभ्यां यथोक्तेश्वरोपासनया तत्प्राप्तेः प्रतिपादनात् । "तं यथा यथोपासते तत्तदेव भवती"ति श्रुतेश्च। भावनामान्द्ये तु तत्तारतम्येन सार्ष्टिसारूप्यसामीप्यसालोक्यानि भवन्ति। साम्नः "सायुज्यं सलोकतां जयती"त्यादिश्रुतेः । ये पुनः साधनचतुष्टयसम्पन्ना विचाराऽसमर्था मन्दप्रज्ञास्तेषां गुरुमुखाद् ब्रह्म निश्चित्य सर्वोपाधिविनिर्मुक्तं सच्चिदानन्दलक्षणं ब्रह्माहमस्मीति निर्गुणब्रह्मोपासनया ऽस्मिन्नेव शरीरे जीवनाऽवस्थायां मरणाऽवस्थायां वा ब्रह्मलोके वा उत्पन्नब्रह्मसाक्षात्कारेण तत्प्राप्तिः फलं भवति। श्रुतिन्यायसाम्यात्। "ओमित्येतेनैवाऽक्षरेण परं पुरुषमभिध्यायीत स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते" "ओमित्यात्मानं युञ्जीत" "ओमित्येवं ध्यायथात्मान"मित्यादिश्रुतिभ्यः । भगवताप्युक्तम् ।

ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥ इति ।
अन्ये त्वेवमजानन्तः श्रुत्वा ऽन्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ इति च ।

एवं तत्पदार्थस्य मायोपहितस्य ब्रह्मणस्तटस्थलक्षणं जगज्जन्मादिकारणत्वं निरूपितम् । अयमेव अध्यारोप इत्युच्यते ।

अस्याऽपवाद इदानीमुच्यते । अपवादो नाम अधिष्ठाने भ्रान्त्या प्रतीतस्य तद्व्यतिरेकेणाऽभावनिश्चयः । यथा शुक्त्यादौ

भ्रान्त्या प्रतीतस्य रजतादेः शुक्तिव्यतिरेकेण नेदं रजतं किं तु शुक्तिरित्यभावनिश्चयः। अयमेव बाधो विलापनमित्युच्यते।

स च बाधस्त्रिविधः। शास्त्रीयो यौक्तिकः प्रत्यक्षश्चेति। "अथात आदेशो नेति नेति" "नेह नानास्ति किं चन" इत्यादिशास्त्राद् ब्रह्मव्यतिरेकेण प्रपञ्चाऽभावनिश्चयः शास्त्रीयो बाधः। मृद्व्यतिरेकेण घटाऽभावनिश्चयवन्निखिलकारणीभूतब्रह्मव्यतिरेकेण प्रपञ्चाऽभावं निश्चित्य दृश्यमानस्य मिथ्यात्वनिश्चयेन ब्रह्मात्ममात्रनिश्चयो यौक्तिको बाधः। "अहं ब्रह्मास्मी"ति तत्त्वमस्यादिवाक्यजन्यसाक्षात्कारेणाऽज्ञानतत्कार्यनिवृत्तिः प्रत्यक्षबाधः।

यौक्तिकबाधस्यायं क्रमः—स्थूलप्रपञ्चं सर्वमपि स्थूलभूतेषु विलाप्य तद्व्यतिरेकेण तन्नास्तीति निश्चित्य स्थूलभूतानि समष्टिव्यष्टिसूक्ष्मशरीरं च सूक्ष्मभूतेषु विलाप्य तत्रापि पृथिवीमप्सु विलाप्य अपस्तेजसि तेजो वायौ वायुमाकाशे आकाशमज्ञाने ऽज्ञानं चिन्मात्रे विलापयेत्। तथा च स्मृतिः।

जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते।
ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते॥
वायुश्च लीयते व्योम्नि तच्चाऽव्यक्ते प्रलीयते।
अव्यक्तं पुरुषे ब्रह्मन्निष्कले संप्रलीयते॥ इति।

उक्तञ्च।
अकारं पुरुषं विश्वमुकारे प्रविलापयेत्।
उकारं तैजसं सूक्ष्मं मकारे प्रविलापयेत्।
मकारं कारणं प्राज्ञं चिदात्मनि विलापयेत्॥ इति।

आभ्यामध्यारोपाऽपवादाभ्यां तत्त्वंपदार्थशोधनमपि सिद्धं भवति। तथा हि—मायादिसमष्टिस्तदुपहितचैतन्यमेतदाधाराऽनुप-

हितमखण्डचैतन्यं च तप्तायःपिण्डवदेतत् त्रयमविविक्तम् एकत्वेनाऽवभासमानं तत्पदवाच्यार्थो भवति। विविक्तमखण्डं चैतन्यं तत्पदलक्ष्यार्थो भवति। अविद्यादिव्यष्टिरेतदुपहितचैतन्यमेतदाधाराऽनुपहितं प्रत्यक्चैतन्यमेतत्त्रयं तप्तायःपिण्डवदविविक्तमेकत्वेनाऽवभासमानं त्वंपदवाच्यार्थो भवति। विविक्तं प्रत्यक्चैतन्यं त्वंपदलक्ष्यार्थो भवति। एतौ लक्ष्यार्थावुपादाय संबन्धत्रयेण सहितं तत्त्वमस्यादिवाक्यं लक्षणया ऽखण्डार्थबोधकं भवति।

संबन्धत्रयं तु पदयोः सामानाधिकरण्यम्। सामानाधिकरण्यं नाम भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः। यथा सो ऽयं देवदत्त इत्यत्र तत्कालविशिष्टदेवदत्तवाचकशब्दस्यैतत्कालविशिष्टवाचकाऽयंशब्दस्य चैकस्मिन् देवदत्तपिण्डे वृत्तिः। सामानाधिकरण्यं। पदार्थयोर्विशेषणविशेष्यभावः। यथा तत्रैव सशब्दाऽर्थतत्कालविशिष्टाऽयंशब्दाऽर्थैतत्कालविशिष्टयोरन्योन्यभेदव्यावर्त्तकतया विशेषणविशेष्यभावः। सो ऽयमयं स इति। पदयोरर्थयोर्वा ऽविरुद्धदेवदत्तपिण्डेन वाक्यार्थेन सह लक्ष्यलक्षणभावः। यथा तत्रैव सशब्दाऽयंशब्दयोस्तदर्थयोर्वा ऽविरुद्धदेवदत्तपिण्डेन वाक्यार्थेन सह लक्ष्यलक्षणभावः। तथा तत्त्वमस्यादिवाक्ये तत्त्वंपदयोः परोक्षाऽपरोक्षत्वविशिष्टेश्वरवाचकयोरखण्डचैतन्ये तात्पर्येण वृत्तिः सामानाधिकरण्यम्। तथा तत्त्वंपदार्थयोरीश्वरजीवयोरन्योन्यभेदव्यावर्त्तकतया तत्त्वमसि, त्वं तदसीति विशेषणविशेष्यभावः। तथा तत्त्वंपदयोस्तदर्थयोर्वा वाक्यार्थेनाऽविरुद्धाऽखण्डचैतन्येन विरुद्धांशपरित्यागेन लक्ष्यलक्षणभावः। तदुक्तम्।

सामानाधिकरण्यं च विशेषणविशेष्यता।
लक्ष्यलक्षणभावश्च पदाऽर्थप्रत्यगात्मनाम्॥ इति।

अस्याऽर्थस्तूक्त एव। एतदभिप्रायेण वाक्यवृत्तावप्युक्तम् ।

तत्त्वमस्यादिवाक्यं च तादात्म्यप्रतिपादने ।
लक्ष्यौ तत्त्वंपदार्थौ द्वावुपादाय प्रवर्त्तते ॥ इति ।

तादात्म्यप्रतिपादने, ऽखण्डस्वरूपप्रतिपादने इत्यर्थः। संसर्गस्य वा विशिष्टस्य वा विशिष्टैक्यस्य वा प्रत्यक्षादिविरुद्धत्वेन तत्त्वमस्यादिवाक्यप्रतिपाद्यत्वाऽयोगात् ।

अखण्डत्वं नाम विजातीयसजातीयस्वगतभेदशून्यत्वम् । सर्वस्य प्रपञ्चस्य ब्रह्मव्यतिरिक्तस्य कल्पितत्वेन मिथ्यात्वाद् विजातीयशून्यता।जीवपरमात्मनोरत्यन्तैक्यात्सजातीयभेदशून्यता। एकरसत्वात्स्वगतभेदशून्यता ।

अथ वा त्रिविधपरिच्छेदशून्यत्वमखण्डत्वम् । विभुत्वाद्देशपरिच्छेदशून्यत्वम्। नित्यत्वात्कालपरिच्छेदशून्यत्वम्।सर्वात्मकत्वाद्वस्तुपरिच्छेदशून्यत्वम् । "वेदाऽहमेतमजरं पुराणं सर्वात्मकं सर्वगतं विभुत्वा"दित्यादिश्रुतेः ।

यद्वा अपर्यायाऽनेकशब्दप्रकाश्यत्वे सति अविशिष्टत्वमखण्डत्वम् । तदुक्तम् ।

अविशिष्टमपर्यायाऽनेकशब्दप्रकाशितम् ।
एकं वेदान्तनिष्णाता अखण्डं प्रतिपेदिरे ॥ इति ।

एवं तत्त्वमस्यादिवाक्यजन्याऽखण्डाऽपरोक्षज्ञानादज्ञाननिवृत्तिरानन्दाऽऽवाप्तिश्च । तदुक्तम् ।

प्रत्यग्बोधो य आभाति सोऽद्वयाऽऽनन्दलक्षणः।
अद्वयाऽऽनन्दरूपश्च प्रत्यग्बोधैकलक्षणः ॥
इत्थमन्योन्यतादात्म्यप्रतिपत्तिर्यदा भवेत् ।
अब्रह्मता त्वमर्थस्य व्यावर्त्तेत तदैव हि ।

तदर्थस्य च पारोक्ष्यं यद्येवं किं ततः शृणु ।
पूर्णाऽऽनन्दैकरूपेण प्रत्यग्बोधो ऽवतिष्ठते ॥ इति ।

अन्योन्यतादात्म्यप्रतिपत्तिः, अहं ब्रह्मास्मीति ब्रह्मैवाऽहमस्मीत्यखण्डाऽऽकारवृत्तिः । तया वृत्त्या अज्ञाने निवृत्ते ऽब्रह्मत्वपरोक्षत्वादीनां निवृत्तत्वात्प्रत्यगात्मनो ऽखण्डाऽऽनन्दस्वरूपाऽवस्थितिर्भवतीति श्लोकार्थः ।

इति प्रथमः परिच्छेदः ॥



# अथ द्वितीयः परिच्छेदः ।

—:o:—

वृत्तिर्नाम विषयचैतन्याऽभिव्यञ्जको ऽन्तःकरणाऽज्ञानयोः परिणामविशेषः।अभिव्यञ्जकत्वं नामाऽपरोक्षव्यवहारजनकत्वम्, आवरणनिवर्त्तकत्वं वा। परिणामो नाम उपादानसमसत्ताकाऽन्यथाभावः,उपादानविषमसत्ताकाऽन्यथाभावो विवर्त्त इति भेदादनयोः परिणामविवर्त्तयोर्वृत्तिः; उपादानाऽन्तःकरणाऽज्ञानाऽपेक्षया परिणामः, चैतन्याऽपेक्षया विवर्त्त इति न सिद्धान्तविरोधः। "तन्मनो ऽकुरुत" इत्यादिश्रुत्या ऽन्तःकरणस्य कार्यद्रव्यत्वेन साऽवयवतया परिणामित्वोपपत्तिः ।

सा च वृत्तिर्द्विविधा, प्रमाऽप्रमाभेदात्।अत्र बोधेद्धा वृत्तिर्वृत्तीद्धो बोधो वा प्रमा।सा च द्विविधा। ईश्वराश्रया जीवाश्रया चेति। तत्रेक्षणाऽपरपर्यायस्रष्टव्यविषयाकारमायावृत्तिः प्रतिबिम्बितचिदीश्वराश्रया। "तदैक्षत बहु स्यां प्रजायेये" त्यादिश्रुतेः । अनधिगताऽबाधितविषयाकाराऽन्तःकरणवृत्तिप्रतिबिम्बितचिज्जीवाश्रया तु द्वितीया । ब्रह्मात्मैक्यप्रमायास्तथात्वान्नाऽसंभवः। प्रपञ्चस्य संसारदशायामबाधितत्वात्तत्प्रमायां नाऽव्याप्तिः। शुक्तिरजतादेर्ज्ञातसत्ताकत्वेनाऽज्ञातसत्ताकत्वाऽभावान्नाऽतिव्याप्तिः। तत्करणं प्रमाणम्।

सा जीवाश्रया प्रमा द्विविधा, पारमार्थिकी व्यावहारिकी चेति। तत्र तत्त्वमस्यादिवाक्यजन्या प्रमा पारमार्थिकी। सा च निरूपिता, अग्रेपि निरूपयिष्यते।

प्रपञ्चप्रमा व्यावहारिकी। सा षड्विधा। प्रत्यक्षाऽनुमित्युपमितिशब्दाऽर्थापत्त्यभावप्रमाभेदात्। तत्र विषयचैतन्या-

ऽभिन्नं प्रमाणचैतन्यं प्रत्यक्षप्रमा । तथा हि—एकमेव चैतन्यमुपाधिभेदाच्चतुर्विधम् । प्रमातृचैतन्यं, प्रमाणचैतन्यं, विषयचैतन्यं, फलचैतन्यं चेति । तत्राऽन्तः करणविशिष्टचैतन्यं प्रमातृचैतन्यम् । अन्तःकरणवृत्त्यवच्छिन्नचैतन्यं प्रमाणचैतन्यम् । घटाऽवच्छिन्नचैतन्यं विषयचैतन्यम् । अन्तःकरणाऽभिव्यक्तचैतन्यं फलचैतन्यम् ।

तत्र वृत्तिविषययोर्युगपदेकदेशाऽवस्थाने तदुपहितचैतन्ययोरप्यभेदो भवति । तथा हि—तडागोदकं छिद्रान्निर्गत्य कुल्याद्वारा केदारं प्रविश्य चतुष्कोणाद्याकारेण यथा परिणमते तथेन्द्रियाऽर्थसन्निकर्षाऽनन्तरम् अन्तःकरणं चक्षुरादिद्वारा विषयदेशं गत्वा तेन संयुज्यते, पश्चात्तदाकारेण परिणमते । सोयं परिणामो वृत्तिः । तस्यां विषयचैतन्यं प्रतिफलति । तदा वृत्तिविषययोर्युगपदेकदेशस्थत्वेन तदुपहिततद्भेदाऽप्रयोजकत्वात् प्रमाणचैतन्यं विषयचैतन्याऽभिन्नं भवति । सेयं प्रत्यक्षप्रमा । तत्र वृत्त्यावरणं निवर्त्तते । चैतन्येनाऽज्ञानं प्रमया वा सावरणमज्ञानं निवर्त्तते । ततो विषयः स्फुरति साक्षिणा । अन्तःकरणोपहितचैतन्यं साक्षी ।

सेयं प्रत्यक्षप्रमा द्विविधा । वाह्यप्रमा ऽऽन्तरप्रमा चेति । तत्र वाह्यप्रमा शब्दस्पर्शरूपरसगन्धभेदात्पञ्चधा । तत्करणानि श्रोत्रादीनि ज्ञानेन्द्रियाणि पञ्च । आन्तरप्रमा द्विविधा । आत्मगोचरा सुखादिगोचरा चेति । आत्मगोचरा द्विविधा । विशिष्टात्मविषया शुद्धात्मविषया चेति । अहं जीव इत्यादि विशिष्टात्मविषया । अहं ब्रह्मास्मीति शुद्धात्मविषया । मयि सुखमित्यादि सुखादिविषया ।

अन्तरिन्द्रियं मन आन्तरप्रमाकरणमिति वाचस्पतिमिश्राः । आचार्य्यास्त्वेवं वर्णयन्ति—

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः॥

इति श्रुतिस्मृतिभ्यां मनस इन्द्रियेभ्यः पृथक्करणान्मनो नेन्द्रियं, वृत्तिं प्रत्युपादानत्वान्न करणं मनः। सुखादिसाक्षात्कारस्य प्रमाणाजन्यत्वेनाऽप्रमात्वमिष्टमेव। अत एवान्तःकरणतद्धर्माणां शुक्तिरजतादिवत्प्रातीतिकत्वम्। शुद्धात्मसाक्षात्कारस्य वेदान्तवाक्यजन्यत्वात्प्रमात्वम्। वाक्यस्यापरोक्षज्ञानजनकत्वं वक्ष्यते। इति प्रत्यक्षप्रमाणम्।

लिङ्गज्ञानजन्यज्ञानमनुमितिः। व्याप्त्याश्रयो लिङ्गम्। साधनसाध्ययोर्नियतसामानाधिकरण्यं व्याप्तिः। प्रतिबन्धकाऽभावे सति सहचारदर्शनेन सा गृह्यते। तस्यां गृहीतायां लिङ्गज्ञानेन व्याप्त्यनुभवजन्यसंस्कारोद्बोधे सत्यनुमितिर्जायते। इयं स्वार्थानुमितिः।

परार्थानुमितिस्तु न्यायसाध्या। न्यायो ऽवयवसमुदायः। अवयवास्त्रयः, प्रतिज्ञाहेतूदाहरणरूपाः। उदाहरणोपनयनिगमनरूपा वा। तथाहि—जीवः परस्मान्न भिद्यते सच्चिदानन्दलक्षणत्वात् परमात्मवदित्यत्र जीवः परस्मान्न भिद्यते इति प्रतिज्ञा। सच्चिदानन्दलक्षणत्वं हेतुः। इदमेव लिङ्गमित्युच्यते। यः सच्चिदानन्दलक्षणः स परस्मान्न भिद्यते यथा परमात्मेत्युदाहरणम्। अहमस्मीति भामीति कदाप्यप्रियो न भवामीत्यनुभवाज्जीवस्य सच्चिदानन्दलक्षणत्वम्। अतो न हेत्वसिद्धिः। "सत्यं ज्ञानमनन्तं ब्रह्म" "आनन्दो ब्रह्मेति व्यजाना"दित्यादिश्रुत्या ब्रह्मणः सच्चिदानन्दलक्षणत्वम्। अतो न दृष्टान्ताऽसिद्धिः। एवं गुरुमुखाच्छ्रुतवेदान्तस्य शोधिततत्त्वंपदार्थस्य स्वस्मिन् सच्चिदानन्दलक्षणदर्शनादहं ब्रह्मेति ब्रह्माऽभिन्नानुमितिरुत्पद्यते।

न चौपनिषदस्य ब्रह्मैक्यस्याऽनुमानगम्यत्वाऽनुपपत्तिः।

मन्तव्य इति मननविधानात् । वेदान्तसहकारित्वेनाऽनुमानप्रामाण्यस्वीकारात् ।

परार्थानुमितिस्तु न्यायोपदेशेनोत्पद्यते । न्यायो दर्शितः । एवं ब्रह्मव्यतिरिक्तस्य मिथ्यात्वसाध्यानुमितिर्दृश्यत्वादिहेतुभिरुत्पद्यते ।

मिथ्यात्वं नामाऽनिर्वचनीयत्वम् । दृश्यत्वं नाम चैतन्यविषयत्वम् । अतो ब्रह्मणि न व्यभिचारः ।

तच्चाऽनुमानमन्वयिरूपमेकमेव, न तु केवलान्वयि । अस्मन्मते ब्रह्मव्यतिरिक्तस्य सर्वस्य प्रपञ्चस्य ब्रह्मनिष्ठाऽत्यन्ताभावप्रतियोगित्वेन तदप्रतियोगित्वरूपकेवलान्वयित्वस्याऽप्रसिद्धेः । नापि व्यतिरेकि । साधनेन साध्याऽनुमितौ साध्याऽभावसाधनाऽभावव्याप्तिज्ञानस्याऽनुपयोगात् । अन्वयव्याप्तिमविदुषः साध्यप्रमा ऽर्थापत्तिप्रमाणादिति वक्ष्यते । इत्यनुमानम् ।

सादृश्यप्रमितिरुपमितिः ।

वाक्यकरणिका प्रमा शाब्दी । अकाङ्क्षायोग्यतासन्निधिमत्पदसमुदायो वाक्यम् । अन्वयानुपपत्तिराकाङ्क्षा । वाक्यार्थाऽबाधो योग्यता । अविलम्बेनोच्चारणं सान्निधिः । अव्युत्पन्नस्य संगतिग्रहाऽभावान्न वाक्यार्थप्रमा ।

पदपदार्थयोः स्मार्यस्मारकभावः संगतिः । सा द्विधा, शक्तिर्लक्षणा चेति । शक्तिर्नाम मुख्या वृत्तिः । पदपदार्थयोर्वाच्यवाचकभावः संबन्ध इति यावत् । सा च द्विविधा, योगो रूढिश्चेति । अवयवशक्तिर्योगः । यथा पाचकादिपदानाम् । रूढिः समुदायशक्तिः । यथा घटादिपदानाम् । सा च व्यवहारादिना गृह्यते । तथाहि—उत्तमवृद्धस्य घटमानयेति वाक्यश्रवणानन्तरं मध्यमवृद्धः प्रवर्त्तते, बालः प्रवृत्तिं दृष्ट्वा ज्ञानमनुमिनोति।

तथा हि—इयं प्रवृत्तिर्ज्ञानसाध्या प्रवृत्तित्वान्मदीयप्रवृत्तिवत् इति ज्ञानमनुमाय तस्य वाक्यजन्यत्वमनुमिनोति। इदं ज्ञानमेतद्वाक्यजन्यम् एतद्वाक्याऽन्वयव्यतिरेकाऽनुविधायित्वाद्दण्डजन्यघटादिवत् इति। अनन्तरमावापोद्वापाभ्यां घटपदस्य घटव्यक्तौ शक्तिमवधारयति।

सा च शक्तिः पदार्थे इति नैयायिकाः। कार्यान्विते इति मीमांसकाः। अन्विते इति वेदान्तिनः।

एवं व्याकरणादिनापि शक्तिर्गृह्यते। उक्तं च—

शक्तिग्रहं व्याकरणोपमान-
कोशाऽऽप्तवाक्याद् व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति
सान्निध्यतः सिद्धपदस्य वृद्धाः॥

लक्षणा शक्यसम्बन्धः। सा च द्विविधा, केवललक्षणा लक्षितलक्षणा चेति। केवला त्रिविधा। जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणा चेति। शक्यार्थाऽपरित्यागेन तत्सम्बन्ध्यर्थान्तरे वृत्तिर्जहल्लक्षणा। यथा गङ्गायां घोषः प्रतिवसतीति। अत्र गङ्गापदस्य तीरे। शक्यार्थाऽपरित्यागेन तत्संबन्ध्यर्थान्तरे वृत्तिरजहल्लक्षणा। यथा मञ्चाः क्रोशन्तीति। अत्र मञ्चपदस्य मञ्चस्थेषु पुरुषेषु। शक्यैकदेशपरित्यागेन एकदेशेन वृत्तिर्जहदजहल्लक्षणा। इयमेव भागलक्षणेत्युच्यते। यथा सोयं देवदत्त इत्यत्र सो ऽयमिति पदयोः केवलदेवदत्तपिण्डे। यथा वा तत्त्वमसीत्यत्र तत्त्वंपदयोरखण्डचैतन्ये। शक्यपरम्परासंबन्धो लक्षितलक्षणा। यथा द्विरेफपदस्य मधुकरे। गौण्यपि लक्षितलक्षणैव।

एवं व्युत्पन्नस्य गृहीतसंगतिकवाक्याद्वाक्यार्थप्रमोत्पत्तौ

आकाङ्क्षा योग्यता आसत्तिस्तात्पर्यज्ञानं चेति चत्वारि कारणानि । आकाङ्क्षायोग्यते निरूपिते ।

शक्तिलक्षणाऽन्यतरसम्बन्धेनाऽव्यवधानेन पदजन्यपदार्थोपस्थितिरासत्तिः । तात्पर्यं द्विविधम् । वक्तृतात्पर्यं शब्दतात्पर्यं चेति । पुरुषाऽभिप्रायो वक्तृतात्पर्यम् । तज्ज्ञानं वाक्यार्थज्ञाने न कारणम् । तदभावे ऽपि अव्युत्पन्नस्य वाक्यार्थज्ञानदर्शनात् ।

तदितरप्रतीतिमात्रेच्छया ऽनुच्चरितत्वे सति तदर्थप्रतीतिजननयोग्यत्वं शब्दतात्पर्यम् । तच्च षड्विधैर्लिङ्गैर्निश्चीयते । वेदे लिङ्गानि तु दर्शितानि ।

उपक्रमोपसंहारावभ्यासो ऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥ इति ।

अस्यार्थः—प्रकरणप्रतिपाद्यस्याऽद्वितीयवस्तुन आद्यन्तयोः प्रतिपादनमुपक्रमोपसंहारौ । तथा छान्दोग्ये ऽपि षष्ठे "सदेव सौम्येदमग्र आसी,देकमेवाद्वितीयं ब्रह्म, ऐतदात्म्यमिदं सर्व" मित्युपक्रमोपसंहारावाद्यन्तयोः ।

प्रकरणप्रतिपाद्यस्य पुनः पुनः प्रतिपादनमभ्यासः । यथा तत्रैव तत्त्वमसीति नवकृत्वो ऽभ्यासः ।

प्रकरणप्रतिपाद्यस्य मानान्तराविषयता ऽपूर्वता । यथा तत्रैव द्वितीयवस्तुनो मानान्तराऽविषयता ।

प्रकरणप्रतिपाद्यस्य श्रूयमाणं तज्ज्ञानात्तत्प्राप्तिः प्रयोजनं फलम् । यथा तत्रैवा "ऽऽचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्ये ऽथ संपत्स्ये" इत्यद्वितीयवस्तुज्ञानात्तत्प्राप्तिः फलम् ।

प्रकरणप्रतिपाद्यस्य प्रशंसनमर्थवादः । यथा तत्रैव "येनाऽश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञात" मित्यद्वितीयवस्तुप्रशंसनम् ।

प्रकरणप्रतिपाद्यस्य दृष्टान्तैः प्रतिपादनमुपपत्तिः । यथा तत्रैव "यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य"मित्यादिवाक्यप्रतिपादितमृदादिदृष्टान्तैरद्वितीयवस्तुप्रतिपादनम् ।

एवं षड्विधतात्पर्यलिङ्गैर्वेदान्तानाम् अद्वितीये ब्रह्मणि तात्पर्यनिश्चयः । इदमेव श्रवणमित्युच्यते ।

श्रुतस्याऽर्थस्योपपत्तिभिश्चिन्तनं मननम् ।

विजातीयप्रत्ययतिरस्कारेण सजातीयप्रत्ययप्रवाहीकरणं निदिध्यासनम् । तदुक्तम्—

शब्दशक्तिविषयं निरूपणं
युक्तितः श्रवणमुच्यते बुधैः ।
वस्तुतत्त्वविषयं निरूपणं
युक्तितो मननमित्युदीर्यते ॥
चेतसस्तु चितिमात्रशेषता
ध्यानमित्यभिवदन्ति वैदिकाः ।
अन्तरङ्गमिदमित्युदीरितं
तत्कुरुष्व परमात्मबुद्धये ॥ इति ।

इदं श्रवणादित्रयं साधनसंपन्नस्य संन्यासिनो ज्ञानं प्रत्यन्तरङ्गसाधनम् । "आत्मा वा ऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इत्यादिश्रुतेः ।

साधनानि नित्याऽनित्यवस्तुविवेक इहाऽमुत्राऽर्थफलभोगविरागः, शमदमादिसंप,न्मुमुक्षुत्वं चेत्येवंरूपाणि । "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन, तद्विज्ञानार्थं स गुरुमेवाऽभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं, कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्, शान्तो दान्त उपरतर-

स्तितिक्षुः समाहितो भूत्वा ऽऽत्मन्येवाऽऽत्मानं पश्ये"दित्यादिश्रुतिभ्यो यथोक्तसाधनसंपन्नस्य संन्यासाऽधिकारः।

विहितानां कर्मणां विधिना परित्यागः संन्यासः। स च वैराग्यहेतुकः। "यदहरेव विरजेत्तदहरेव प्रव्रजे"दित्यादिश्रुतेः। "वैराग्यं परमेतस्य मोक्षस्य परमो ऽवधिरिति श्रुतेश्च। स वैराग्यतारतम्येन चतुर्विधः, कुटीचकबहूदकहंसपरमहंसभेदात्।

वैराग्यं द्विविधम्, अपरं परं चेति। तत्राऽपरं चतुर्विधम्। यतमानव्यतिरेकैकेन्द्रियत्ववशीकारभेदात्।

अस्मिन् संसारे इदं सारमिदमसारमिति साराऽसारविवेको यतमानवैराग्यम्।

चित्तगतदोषाणां मध्ये एतावन्तः पक्वा एतावन्तो ऽपक्वा इति विविच्याऽपक्वदोषनिरोधयत्नो व्यतिरेकवैराग्यम्।

विषयेच्छासत्त्वे ऽपि मनसीन्द्रियनिरोधाऽवस्थानमेकेन्द्रियत्वं वैराग्यम्।

वशीकारवैराग्यमैहिकाऽऽमुष्मिकविषयजिहासा। तदुक्तम्—"दृष्टाऽऽनुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्य"मिति। तच्च त्रिविधम्, मन्दं तीव्रं तीव्रतरं चेति।

पुत्रदारादिवियोगे धिक् संसारमिति बुद्ध्या विषयजिहासा मन्दवैराग्यम्।

अस्मिन् जन्मनि पुत्रदारादि मास्त्विति स्थिरबुद्ध्या विषयजिहासा तीव्रम्।

पुनरावृत्तिसहितब्रह्मलोकादिपर्यन्तं मास्त्विति स्थिरबुद्ध्या विषयजिहासा तीव्रतरम्। तत्र मन्दवैराग्ये संन्यासाऽधिकार एव नास्ति।

यदा मनसि वैराग्यं जायते सर्ववस्तुषु।

तदैव संन्यसेद्विद्वानन्यथा पतितो भवेत् ॥ इति स्मरणात्।

तीव्रवैराग्ये सति यात्राद्यशक्तौ कुटीचकाधिकारः। तच्छक्तौ बहूदकसंन्यासाधिकारः। तीव्रतरवैराग्ये सति हंससंन्यासाधिकारः। एते संन्यासास्त्रयः। एतेषामाचाराः स्मृतौ प्रसिद्धाः। तीव्रतरवैराग्ये मुमुक्षोः परमहंससंन्यासाधिकारः।

स च परमहंसो द्विविधः। विविदिषासंन्यासो विद्वत्संन्यासश्चेति।

साधनसंपन्नेन तत्त्वमुद्दिश्य क्रियमाणः संन्यासो विविदिषासंन्यासः।"एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ती"त्यादिश्रुतिस्तत्र प्रमाणम्।

स च द्विविधः। जन्मापादककर्मत्यागात्मकः, प्रैषोच्चारणपूर्वकदण्डधारणाद्याश्रमरूपश्चेति। "न कर्मणा न प्रजया धनेन त्यागेनैकेनामृतत्वमानशुरि"त्यादिश्रुतिराद्ये मानम्।

विरक्तस्य गृहस्थादेः प्रयत्ननिमित्तवशेन संन्यासप्रतिबन्धे आद्यसंन्यासे ऽधिकारः। अत्र स्त्रीणामप्यधिकारः। जनकादीनां मैत्रेयीप्रभृतीनां तत्त्वविदां श्रुतिस्मृतीतिहासपुराणेषूपलम्भात्।

द्वितीये दण्डमाच्छदनं कौपीनं परिगृहेच्छेषं विसृजेत्।
संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया।
प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः॥
इत्यादिवचनानि प्रमाणानि।

गृहस्थाश्रमादौ कृतश्रवणादिभिरुत्पन्नब्रह्मसाक्षात्कारेण गृहस्थादिना विक्षिप्तचित्तस्य चित्तविश्रान्तिलक्षणजीवन्मुक्तिमुद्दिश्य क्रियमाणः संन्यासो विद्वत्संन्यासः। तत्र "एतमेव विदित्वा मुनिर्भवति अथ योगिनां परमहंसाना"मित्यादिपरमहंसोपनिषत्,

यदा तु विदितं तत्त्वं परं ब्रह्म सनातनम् ।
तदैकदण्डं संगृह्य सोपवीतां शिखां त्यजेत् ।

इत्यादिश्रुतिस्मृतिवचनानि प्रमाणानि । तत्राद्यसंन्यासो जन्मान्तरीयो ऽपि ज्ञाने उपकरोति। जनकादीनां तत्त्वज्ञानोपालम्भाच्छ्रुत्यादिषु "यद्यातुरः स्यान्मनसा वाचा वा संन्यसे"दित्यातुरसंन्यासविधानाच्च। आतुरेऽपि विरक्तस्यैवाधिकारान्न संन्यासान्तरम् । अन्यथा प्रकरणविरोधप्रसङ्गात् । तदुक्तम् ।

जन्मान्तरेषु यदि साधनजातमासीत्
संन्यासपूर्वकमिदं श्रवणादिकं च ।
विद्यामवाप्स्यति जनः सकलो ऽपि यत्र
तत्राश्रमादिषु वसन्न निवारयामः ॥ इति ।

तदेवं पूर्वोक्ताधिकारिणः श्रवणादीनां तत्त्वज्ञानकारणत्वमन्वयव्यतिरेकाभ्यां निश्चीयते ।

अर्हार्थे श्रोतव्य इत्यादितव्यप्रत्यय इति वाचस्पतिमिश्राः ।

आचार्यास्त्वेवं वर्णयन्ति—यथोक्ताधिकारिणो द्रष्टव्यः श्रोतव्य इत्यादिवाक्यैर्दर्शनमुद्दिश्य मनननिदिध्यासनाभ्यां फलोपकार्यङ्गाभ्यां श्रवणं नामाऽङ्गि विधीयते। तस्य च दृष्टफलत्वान्नापूर्वविधिः । अप्राप्तविधायको ह्यपूर्वविधिः। किं तु नियमविधिर्वा परिसंख्याविधिर्वा ।

पक्षप्राप्तस्याप्राप्तांशपूरको विधिर्नियमविधिः। यथा "व्रीहीनवहन्या"दित्यवघातविधिः ।

उभयप्राप्तावितरव्यावृत्तिबोधको विधिः परिसंख्याविधिः । यथा "इमामगृभ्णन् रशनामृतस्येत्यश्वभिधानीमादत्ते" इति गर्दभरशनाग्रहणव्यावृत्तिविधिः। एवं प्रकृते जिज्ञासुर्वेदान्तश्रवणमेव कुर्या-

दिति नियमविधिः । वेदान्तश्रवणव्यतिरिक्तं न कुर्यादिति परिसंख्याविधिर्वा । तदुक्तम् ।

नियमः परिसंख्या वा विध्यर्थो हि भवेद्यतः ।
अनात्माऽदर्शनेनैव पराऽऽत्मानमुपास्महे ॥ इति ।
तच्च श्रवणं संन्यासिनां नित्यम् ।
नित्यं कर्म परित्यज्य वेदान्तश्रवणं विना ।
वर्त्तमानस्तु संन्यासी पतत्येव न संशयः ॥

इति अकरणे प्रत्यवायश्रवणात् । "आ सुप्तेरा मृतेः कालं नयेद्वेदान्तचिन्तये"ति स्मृत्या "यावज्जीवमग्निहोत्रं जुहुया"दित्यादिश्रुत्या जीवनं निमित्तीकृत्याऽग्निहोत्रादिविधानवज्जीवनं निमित्तीकृत्य श्रवणादिविधानात् ।

त्वंपदार्थविवेकाय संन्यासः सर्वकर्मणाम् ।
श्रुत्या ऽभिधीयते यस्मात्तत्त्यागी पतितो भवेत् ॥
कारकस्य करणेन तत्क्षणाद्
भिक्षुरेव पतितो यथा भवेत् ।
व्यञ्जकस्य परिवर्जनादसौ
सद्य एव पतितो न संशयः ॥

इति वार्त्तिकाचार्यसंक्षेपशारीरकाचार्याभ्यां श्रवणादिरहितस्य संन्यासिनः पातित्याऽभिधानाच्च ।

गृहस्थादीनां श्रवणादि काम्यम् ।
दिने दिने तु वेदान्तश्रवणाद्भक्तिसंयुतात् ।
गुरुशुश्रूषया लब्धात्कृच्छ्राऽशीतिफलं लभेत् ॥

अन्ये तु वेदान्तश्रवणे साधनचतुष्टयसंपन्नस्यैवाऽधिकाराद् गृहस्थादेः श्रवणाऽधिकार एव नास्ति, श्रुतिषु याज्ञवल्क्यजनकादीनां तत्त्वज्ञानप्रतिपादकोपाख्यानस्य ब्रह्मात्मनि तात्पर्याद्

स्वार्थे तात्पर्यमेव नास्तीत्याहुः । तदसत् । याज्ञवल्क्यप्रभृतीनां गृहस्थस्य तुलाधारस्य च ज्ञानित्वश्रवणात् ।

परं वैराग्यं गुणवैतृष्ण्यम् । गुणेषु जिहासेति यावत् । तदुक्तं "तत् परं पुरुषख्यातेर्गुणवैतृष्ण्य"मिति । तच्चाऽसंप्रज्ञातसमाधेरन्तरङ्गसाधनम् । उक्तं च "तीव्रसंवेगानामासन्नः समाधिलाभ" इति । अलमतिप्रसङ्गेन ।

एवं कर्मवाक्यानामप्युपक्रमादिभिस्तात्पर्यनिर्णयः । प्रकरणादिना लौकिकवाक्यानां तात्पर्यनिर्णयः । एतादृशतात्पर्याऽनुपपत्तिः पूर्वोक्तलक्षणाबीजं, न त्वन्वयाऽनुपपत्तिः । तस्या यष्टीः प्रवेशयेत्यादावसंभवात् । गङ्गायां घोष इत्यादौ तात्पर्याऽनुपपत्तेः संभवात् । न केवलं लक्षणा पदमात्रवृत्तिः, किं तु वाक्यवृत्तिरपि । गभीरायां नद्यां घोष इत्यादौ पदसमुदायात्मकवाक्यस्य तीरे लक्षणास्वीकारात् । अत एवाऽर्थवादवाक्यानां प्राशस्त्ये लक्षणा । अन्यथा पदान्तरवैयर्थ्यं स्यात् । अत एव प्राशस्त्यपदार्थप्रत्यायकत्वेनाऽर्थवादवाक्यानां पदस्थानीयतया पदैकवाक्यत्वम् । स्वार्थे तात्पर्यवतां "समिधो यजति" "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"त्यादिवाक्यानामुपकारकाऽऽकाङ्क्षायाम् एकवाक्यत्वं वाक्यैकवाक्यत्वम् । एवं चाऽवान्तरवाक्यार्थज्ञानमपि महावाक्यार्थज्ञाने कारणम् । तथा ऽन्वयव्यतिरेकाऽनुविधानात् ।

एवं यथोक्तसहिकारिसंपन्नं वाक्यं परोक्षाऽपरोक्षभेदेन द्विविधां प्रमामुत्पादयति ।

तत्र परोक्षार्थप्रतिपादकं वाक्यं परोक्षप्रमोत्पादकम् । यथा "स्वर्गकामो यजेत" "सदेव सौम्येदमग्र आसीत्" "दशमोस्ती"त्यादिवाक्यम् । परोक्षत्वं नामाऽनावृतसंवित्तादात्म्याभावो योग्यस्य विषयस्य । धर्माऽधर्मयोरयोग्यत्वान्न प्रत्यक्षत्वम् ।

अपरोक्षार्थप्रतिपादकं वाक्यमपरोक्षप्रमोत्पादकम्। यथा दशमस्त्वमसि तत्त्वमसीत्यादिवाक्यम्। अपरोक्षत्वं नामाऽनावृतसंवित्तादात्म्यम्।अनावृतसंवित्साक्षिचैतन्यम्। अन्तःकरणोपहितं चैतन्यं साक्षी। तस्यावृतत्वे जगदान्ध्यप्रसङ्गः। तत्तादात्म्यं नाम तद्भिन्नत्वे सति तदभिन्नसत्ताकत्वम्। तथा च दशमस्त्वमसीत्यत्र दशमस्य त्वम्पदार्थाऽभिन्नतया ऽपरोक्षत्वेन वाक्याद्दशमाऽपरोक्षप्रमैव जायते दशमोस्मीति, न तु वाक्यात्परोक्षज्ञानं मनसा तत्साक्षात्कारः। मनसो ऽनिन्द्रियत्वस्योक्तत्वात्, वृत्ति प्रत्युपादनत्वेन करणत्वाऽयोगाच्च, प्रमाणजन्याऽपरोक्षज्ञानस्यैव भ्रमनिवर्त्तकत्वाच्च। एवं तत्त्वमसि इत्यत्रापि तत्पदलक्ष्यस्य ब्रह्मणस्त्वंपदलक्ष्यसाक्ष्यभिन्नतया ऽनावृतसंवित्तादात्म्यान्नित्याऽपरोक्षत्वेन शोधितत्वंपदार्थस्याऽधिकरिणो मननिदिध्यासनसंस्कृतान्तःकरणसहकृतविचारिततत्त्वमस्यादिवाक्यादहं ब्रह्मास्मीत्यपरोक्षप्रमा जायते। एवं च सति "सर्वे वेदा यत्पदमामनन्ति" "तं त्वौपनिषदं पुरुषं पृच्छामि" नाऽवेदविन्मनुतेतं बृहन्त"मित्यादिश्रुतयः सामञ्जस्येनोपपद्यन्ते। "मनसैवानुद्रष्टव्य"मित्यादिश्रुतिस्तु मनसो वाक्यसहकारित्वप्रतिपादनपरा। अन्यथा "यन्मनसा न मनुते" इत्यादिश्रुतिविरोधप्रसङ्गात्। एवं शाब्दी प्रमा निरूपिता।

अनुपपद्यमानार्थदर्शनात् तदुपपादकभूताऽर्थान्तरकल्पनमर्थापत्तिप्रमा। यथा दिवा ऽभुञ्जानस्य देवदत्तस्य रात्रिभोजनं विना ऽनुपपद्यमानपीनत्वज्ञानात्तदुपपादकरात्रिभोजनकल्पनम्। तत्राऽनुपपद्यमानपीनत्वज्ञानं करणम्। रात्रिभोजनकल्पनं फलम्।

सा चाऽर्थापत्तिर्द्विविधा, दृष्टाऽर्थापत्तिः श्रुताऽर्थापत्तिश्चेति। दृष्टाऽर्थापत्तिर्यथा शुक्ताविदं रजतमित्यनुभूयमानस्य नेदं रजत-

मितिवाध्यत्वं दृष्टं, तस्य मिथ्यात्वमन्तरेण सत्यत्वे ऽनुपपन्नं सन्मिथ्यात्वं कल्पयति। न चेदं रजतमितिज्ञानद्वयम्। पुरोवर्त्तिनि प्रवृत्त्यभावप्रसङ्गात्। रजतस्याऽसत्त्वे तज्ज्ञानस्य प्रत्यक्षाऽभावप्रसङ्गात्। सत्त्वे वाधाऽभावप्रसङ्गात्। देशान्तरसत्त्वे रजतेन्द्रियसन्निकर्षाऽभावेन प्रत्यक्षाऽभावप्रसङ्गात्। रजतं साक्षात्करोमीत्यनुभवस्य सर्वाऽनुभवसिद्धत्वात्। तस्माद्भ्रमकाले शुक्तिकाशकले रजतमुत्पद्यतइत्यङ्गीकर्त्तव्यम्। रजतोत्पादकलौकिकसामग्र्यभावे ऽपि पुरोवर्तीन्द्रियसन्निकर्षानन्तरमिदमाकारवृत्तौ सत्यामिदमवच्छिन्नचैतन्यनिष्ठा शुक्तित्वप्रकारिका ऽविद्या सादृश्यदर्शनसमुद्बुद्धसंस्कारसहकृता रजताकारेण तज्ज्ञानाकारेण च परिणमते। तस्य च मायाकार्यत्वात् मिथ्यात्वम्। एवं दृष्टाऽर्थापत्तिर्निरूपिता।

श्रुताऽर्थापत्तिर्यथा "तरति शोकमात्मवि"दिति शोकोपलक्षितप्रमातृत्वादिवन्धस्य ज्ञाननिवर्त्यत्वं श्रुतं, तस्य मिथ्यात्वमन्तरेण सत्यत्वे ऽनुपपन्नं सन्मिथ्यात्वं कल्पयति। सेयं श्रुतार्थापत्तिः।

अन्तःकरणविशिष्टं चैतन्यं प्रमाता कर्त्ता भोक्ता च। केवलस्यात्मनो ऽसङ्गत्वेन प्रमातृत्वाद्यनुपपत्तेः शुक्तिरजतवदात्माज्ञानादन्तःकरणादिकं स्वरूपेण प्रत्यगात्मन्यध्यस्तम्।

अध्यासो नाम परत्र पराऽवभासः।

स च द्विविधः। ज्ञानाऽध्यासो ऽर्थाऽध्यासश्चेति। तत्राऽतस्मिंस्तद्बुद्धिर्ज्ञानाऽध्यासः। यथा शुक्तौ रजतबुद्धिः, यथा वाऽऽत्मन्यनात्मबुद्धिः।

प्रमाणजन्यज्ञानविषयः पूर्वदृष्टसजातीयो ऽर्थाऽध्यासः। सोपि द्विविधः। प्रातीतिको व्यावहारिकश्चेति। तत्राऽऽगन्तुकदोषजन्यः प्रातीतिकः। यथा शुक्तिरजतादिः। प्रातीतिकभिन्नो व्यावहा-

रिकः। यथाऽऽकाशादि घटान्तं जगत् । तथा च प्रमातृत्वादिबन्धस्याऽध्यस्ततया मिथ्यात्वमुपपद्यते ।

एतदभिप्रायेणोक्तम् भगवता भाष्यकारेण "स्मृतिरूपः परत्र पूर्वदृष्टाऽवभासः सजातीयाऽवभास" इति। अस्यार्थः— स्मृतिरूपः संस्कारजन्यत्वेन स्मृतिसदृशः पूर्वदृष्टाऽवभासः पूर्वदृष्टसजातीय इति। एवं श्रुताऽर्थापत्तिर्निरूपिता।

अभावप्रमा योग्याऽनुपलब्धिकरणिका। यथा घटाऽनुपलब्ध्या घटाऽभावप्रमा भूतले जायते, तत्राऽनुपलब्धिरेव करणं, नेन्द्रियं, तस्याऽधिकरणग्रहेणोपक्षीणत्वात्, अभावेन समं संनिकर्षाऽभावाच्च।

असाधारणं कारणं करणम्।

नियतपूर्ववृत्ति कारणम्। तद् द्विविधम्, उपादानकारणं निमित्तकारणं चेति। कार्याऽन्वितं कारणमुपादानं, यथा घटादेर्मृदादिः। कार्याऽनुकूलव्यापारवन्निमित्तम् । यथा घटादेः कुलालादि। ब्रह्म तु मायोपहितं सत्प्रपञ्चस्योपाधिप्राधान्येनोपादानं, स्वप्राधान्येन निमित्तम्। "तदैक्षत बहु स्यां प्रजायेये"-त्यादिश्रुतेः। "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधा"दिति सूत्राच्च।

तच्च कारणं द्विविधम्। साधारणमसाधरणं चेति। कार्यमात्रोत्पादकं साधारणं कारणं, यथा ऽदृष्टादि। कार्यविशेषोत्पादकमसाधारणकारणम्। यथा चाक्षुषादिप्रमायां चक्षुरादि। तथा च घटाद्यभावप्रमायां घटाद्यनुपलब्धिरसाधारणं कारणम्। तदेव करणम्।

यद्यत्र घटः स्यादिति तर्कितेन प्रतियोगिसत्त्वेन तर्ह्युपलभ्येतेति प्रसञ्जित उपलब्धिरूपः प्रतियोगी यस्याः सा योग्याऽनुपलब्धिः। तया अभावो गृह्यते।

नञर्थोल्लिखितधीविषयो ऽभावः । सो ऽत्यन्ताऽभाव एक एव, भेदे प्रमाणाऽभावात् । तथा हि—"सदेव सौम्येदमग्रआसीत्" "सत्त्वाच्चावरस्ये"ति श्रुतिसूत्राभ्यां प्रागुत्पत्तेः कार्यस्य कारणात्मना सत्त्वप्रतिपादनेन प्रागभावस्य दुर्निरूपत्वात् । प्रागात्मज्ञानात्कार्यस्य निरन्वयनाशाऽनङ्गीकारेण ध्वंसस्यापि दुर्निरूपत्वात् । अनादिनित्यत्रैकालिकाऽत्यन्ताभावाऽन्योन्याभावसत्त्वे ऽद्वैतश्रुतिविरोधापत्तेः । अतो ऽत्यन्ताभाव एक एव ।

स च द्विविधः, पारमार्थिको व्यावहारिकश्चेति । "नेह नानाऽस्ति किं चने"त्यादिश्रुतिप्रतिपादितः प्रपञ्चाऽत्यन्ताभावः पारमार्थिकः । स चाऽधिष्ठानस्वरूपः । अधिष्ठानाऽतिरिक्त इति के चित् ।

घटाऽत्यन्ताभावो व्यावहारिकः । अयमेवाऽभेदप्रतियोगिको भूतले घटो नेत्यादिप्रतीतिविषयो भेद इत्युते । घटो नास्तीत्यादिविषयो ऽत्यन्ताऽभाव इत्युच्यते वादिभिः । सर्वो ऽप्यनित्य एव । सर्वस्य ब्रह्मज्ञाननिवर्त्यत्वात् ।

अन्ये तु लौकिकतन्त्रान्तरबुद्धिमनुसरन्तो ऽभावभेदं स्वीचक्रुः । तथा हि—प्रागभावप्रध्वंसाऽभावाऽत्यन्ताऽभावाऽन्योन्याऽभावभेदाच्चतुर्विधो ऽभावः ।

उत्पत्तेः प्राक्कारणे कार्याऽभावः प्रागभावः । यथा मृदादौ घटाद्यभावः ।

प्रतियोगिसमानाऽधिकरणाऽभावो ऽत्यन्ताभावः । यथा भूतलादौ घटाद्यभावः ।

प्रतियोगिसमानाधिकरणाऽभावो ऽन्योन्याभावः । यथा भूतलादौ घटभेदः । सर्वे ऽप्यभावा अनित्याश्चेति । एवमभावप्रमा निरूपिता ।

एवं षड्विधप्रमया साऽऽवरणमज्ञानं निवर्त्तते। तत्र परोक्षप्रमया ऽसत्त्वापादकमौढ्याऽज्ञाननिवृत्तिः । अपरोक्षप्रमया ऽसत्त्वाभानाऽऽपादकाऽज्ञाननिवृत्तिः ।

इति तत्त्वाऽनुसंधाने द्वितीयः परिच्छेदः ॥



# अथ तृतीयः परिच्छेदः ।

भ्रमाऽभिन्नं ज्ञानमप्रमा । सा च द्विविधा, स्मृतिरनुभूतिश्चेति ।

संस्कारमात्रजन्यं ज्ञानं स्मृतिः । सा ऽपि द्विविधा, यथार्थाऽयथार्थभेदात् । यथार्था स्मृति रपि द्विविधा, अनात्मस्मृति,रात्मस्मृतिश्चेति ।

तत्र व्यवहारिकप्रपञ्चो मिथ्या दृश्यत्वाज्जडत्वात्परिच्छिन्नत्वात् शुक्तिरूप्यवदित्यनुमानसिद्धमिथ्यात्वाऽनुसंधानं यथार्थाऽनात्मस्मरणम् ।

तत्त्वमस्यादिवाक्यार्थाऽनुसंधानं यथार्थाऽऽत्मस्मरणम् ।

अयथार्था स्मृतिरापि द्विविधा, पूर्ववत् । प्रपञ्चस्य सत्यत्वाऽनुसंधानमयथार्थाऽनात्मस्मरणम् । मिथ्यावस्तुत्वात्तस्य अहंकारादिष्वात्मत्वाऽनुसंधानमात्मनि कर्तृत्वानुसंधानं वा ऽयथार्थात्मस्मरणम् । स्वप्नस्त्वनुभव एव, न स्मृतिरिति वक्ष्यते ।

स्मृतिभिन्नं ज्ञानमनुभूतिः । सा च द्विविधा, यथार्था ऽयथार्था चेति । यथार्थाऽनुभूतिः प्रमा । सा निरूपिता ।

बाधितविषया ऽनुभूतिरयथार्था । सापि द्विविधा, संशयो निश्चयश्चेति । एकस्मिन् धर्मिणि भासमानविरुद्धनानाकोटिकज्ञानं संशयः ।

एकस्मिन् धर्मिणि स्वाऽऽकारविरुद्धधर्मद्वयवैशिष्ट्याऽवगाहिज्ञानाऽविरुद्धज्ञानं संशय इति केचित् ।

स च द्विविधः । प्रमाणसंशयः प्रमेयसंशयश्चेति ।

तत्र प्रमाणगता ऽसंभावना प्रमाणसंशयः । यथा ऽनभ्यासदशायां जलोत्पन्नं जलज्ञानं प्रमाणं न वेति संशयः । स च प्रामाण्यनिश्चयान्निवर्त्तते । प्रामाण्यनिश्चयस्तु स्वत एव ।

प्रामाण्यं नाम तद्वति तत्प्रकारकत्वम् । स्वतस्त्वं नाम यावत्स्वाऽऽश्रयग्राहकग्राह्यत्वम् । स्वाश्रयो वृत्तिज्ञानं, तद्ग्राहकं साक्षिचैतन्यं, तेन तन्निष्ठप्रामाण्यं गृह्यते इति स्वतःप्रामाण्यम् ।

अप्रामाण्यं परतो गृह्यते । तच्च तदभाववति तत्प्रकारकत्वम् । तदभाववत्त्वस्य वृत्तिज्ञानाऽनुपनीतत्वेन साक्षिणा ग्रहीतुमशक्यतया परत एवाऽप्रामाण्यं गृह्यते ।

प्रामाण्यस्वतस्त्वपक्षे संशयो दोषवशादुपपद्यते, इत्ययं प्रमाणसंशयः। वेदान्ता अद्वितीये ब्रह्मणि प्रमाणं न वेति संशयः करणगता ऽसंभावना । सा च श्रवणेन निवर्त्तते। तच्च निरूपितम् । तदपि श्रवणं शारीरकप्रथमाऽध्यायपठनेन निष्पद्यते ।

प्रमेयगता ऽसंभावना द्विविधा, अनात्मगता आत्मगता चेति । स्थाणुर्वा पुरुषो वेत्यनात्मसंशयः ।

आत्मसंशयो ऽनेकविधः । तथा हि—ब्रह्माऽद्वितीयं सद्वितीयं वा, अद्वितीयत्वेऽपि आनन्दगुणकं वा आनन्दस्वरूपं वे, त्यादि परमात्मगतः संशयः ।

आत्मा देहाद्यतिरिक्तो वा न वा, देहाद्यतिरिक्तत्वे ऽपि कर्त्ता वा अकर्त्ता वा, अकर्त्तृत्वेऽपि चिद्रूपो वा ऽचिद्रूपो वा, चिद्रूपत्वेऽपि आनन्दात्मको वा न वे,त्यादि जीवगतः संशयः। जीवस्य सच्चिदानन्दरूपत्वे ऽपि परमात्मना सहैक्यं संभवति न वा, ऐक्येऽपि तज्ज्ञानं मोक्षसाधनं न वा, मोक्षसाधनत्वेऽपि तज्ज्ञानं कर्मसमुच्चितं मोक्षसाधनं वा, केवलं ज्ञानं वे,त्यैक्यगतसंशयः । अयं सर्वोऽपि संशयो मननेन तर्कात्मकेन निवर्त्तते ।

तर्को नामाऽनिष्टप्रसङ्गः। व्याप्याऽऽरोपेण व्यापकाऽऽपादानमिति यावत् । व्याप्त्याश्रयो व्याप्यम् । व्याप्तिनिरूपकं व्यापकम् । तथा च यदि प्रपञ्चः सत्यः स्यात्तर्हि अद्वितीयश्रुतिवि-

रोधः स्यात् । यदि परमात्मा जीवभिन्नः स्यात्तर्हि घटादिवद्-नात्मत्वेनाऽनित्य एव स्यात् । यद्यात्मा ऽऽनन्दो न स्यात्तर्हि कोपि न व्याप्रियेतेत्यादिव्याप्यारोपेण व्यापकप्रसञ्जनरूपास्तर्काः श्रुत्युक्ता द्रष्टव्याः । एतच्च निरूपितम् । एतन्मननं शारीरकद्वितीयाऽध्यायपठनेन निष्पद्यते ।

संशयविरोधि ज्ञानं निश्चयः । स च द्विविधः, यथार्थो ऽयथार्थश्चेति । अविसंवादी यथार्थनिश्चयः । स चोक्त एव ।

विसंवाद्ययथार्थनिश्चयः । स च द्विविधः । तर्को विपर्ययश्चेति । तर्कस्तूक्त एव । विपर्ययो मिथ्याज्ञानम् । अतस्मिंस्तद्बुद्धिरिति यावत् । स च द्विविधः, निरुपाधिकः सोपाधिकश्चेति । तत्राद्यो द्विविधः । बाह्य आभ्यन्तरश्चेति । शुक्त्यादाविदं रजतमित्यादि बाह्यः । अहमज्ञो ब्रह्म न जानामीत्याद्याभ्यन्तरः ।

सोपाधिको द्विविधः, बाह्य आभ्यन्तरश्चेति । लोहितः स्फटिक इत्यादि बाह्यः । आकाशादिप्रपञ्चभ्रमोपि बाह्यः । सोपाधिकः कर्त्राऽविद्याकार्यत्वात्तत्त्वज्ञानिनो निवृत्ते ऽप्यज्ञाने प्रारब्धक्षयपर्यन्तं प्रपञ्चोपलब्धिदर्शनात् कर्तृत्वादिभ्रम आन्तरः ।

स्वप्नो ऽप्याभ्यन्तरः सोपाधिकभ्रम एव, न तु स्मृतिः । तथा हि—जाग्रद्भोगप्रदकर्मोपरमे सति स्वप्नभोगप्रदकर्मोद्रेके सकलविषयेन्द्रियादिवासनावासितं निद्रादोषोपप्लुतमन्तःकरणं रथादिविषयाऽऽकारेण ग्राहकेन्द्रियाद्याकारेण रथादिविषयाकारवृत्त्याकारेण च परिणमते । अन्तःकरणोपहितसाक्षी स्वयमन्याऽनवभास्यस्तत्सर्वमवभासयति । अतः स्वप्ने साक्षिणः स्वप्रकाशत्वं सुविज्ञेयम् । जाग्रदवस्थायां सूर्यादितेजोभिः संकीर्णत्वात् साक्षिणः स्वप्रकाशत्वं दुर्विज्ञेयम् । स्वप्ने तु सूर्यादीनां जाग्रत्पदार्थानामुपरतत्वात्स्वयंप्रकाशत्वं विवेक्तुं शक्यते ।

तथा च श्रुतिः "स यत्र प्रस्वपित्यस्य लोकस्य सर्वतो मात्रामुपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयंज्योतिर्भवति न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथः सृजते" इत्यादिः। स्वयंज्योतिः स्वयंप्रकाशश्चैतन्याऽविषय इति यावत्॥ एवं स्वप्नो ऽनुभवरूप एव न स्मृतिः। अन्यथा रथं पश्यामीत्यनुभवविरोधप्रसङ्गात्। स्वप्नपदार्थानामन्तःकरणमायाद्वारा शुद्धचैतन्याऽध्यस्तत्वेन इदानीं तत्साक्षात्काराऽभावेन बाधाऽभावेपि सोपाधिकतयोपाधिनिवृत्त्या तन्निवृत्तिरिति न जाग्रदवस्थायामनुवृत्तिः। कार्यनिद्रोपप्लुतमन्तःकरणमुपाधिः।

केचित्तु स्वप्नाऽध्यासं निरुपाधिकं वदन्ति। तत्र विरोधिजाग्रत्प्रत्ययेन तन्निवृत्तिः।

पुनश्च विपर्ययः प्रकारान्तरेण द्विविधः। अन्तःकरणवृत्तिरूपो ऽविद्यावृत्तिरूपश्चेति। स्वप्नादिरन्तःकरणवृत्तिरूपः। रजतादिभ्रमो ऽविद्यावृत्तिरूपः। संशयस्त्वविद्यावृत्तिरेव। तत्रैवं सति निरुपाधिकविपर्ययो निदिध्यासनेन निवर्त्तते। सोपाधिकस्तूपाधिनिवृत्त्या। निदिध्यासनं निरूपितमेव। तदपि शारीरकतृतीयाऽध्यायपठनेन निष्पद्यते।

एवं च श्रवणमनननिदिध्यासनैरसंभावनाविपरीतभावनानिवृत्तावसत्यन्यस्मिन्प्रतिबन्धे तत्त्वमस्यादिवाक्यादहं ब्रह्मास्मीति अपरोक्षप्रमा जायते। तदुक्तम् "ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्" इति।

प्रतिबन्धस्त्रिविधः। भूतभाविवर्त्तमानभेदात्। भूतप्रतिबन्धः पूर्वाऽनुभूतविषयस्याऽऽवेशेन पुनःपुनः स्मरणम्। तदुपाधिकब्रह्माऽनुसंधानेनतन्निवृत्तिः। यथा भिक्षोः पूर्वाऽनुभूतमाहिष्यादिस्मर-

णेन तत्त्वज्ञानानुत्पत्तौ गुरूपदिष्टतदुपाधिकब्रह्माऽनुसंधानेन तन्निवृत्तिरिति वदन्ति ।

भाविप्रतिबन्धो द्विविधः । प्रारब्धशेषो ब्रह्मलोकेच्छा चेति ।

तत्र प्रारब्धकर्म द्विविधम् । फलाऽभिसंधिकृतं केवलं चेति । तत्र फलाऽभिसंधिकृतं फलं दत्त्वैव न श्यति । तस्मिन् सति ज्ञानं नोत्पद्यते । तस्य प्रबलत्वात् । तथा चश्रुतिः "स यथाकामो भवति तथाक्रतुर्भवति यक्रतुर्भवति तत्कर्म कुरुते यत् कर्म कुरुते तदभिसंपद्यते" इति । तादृशप्रारब्धशेषो भाविप्रतिबन्धः केवलं प्रारब्धतत्त्वज्ञानहेतुः पापनिवृत्तिद्वारा । तथा च श्रुतिस्मृती "धर्मेण पापमपनुदति" "ज्ञानुमुत्पद्यते पुंसां क्षयात् पापस्य कर्मण" इति। "कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्त्तते" इति च । एवं च भाविप्रतिबन्धस्य प्रारब्धशेषस्य भोगेनाऽनिवृत्तौ सत्यपि श्रवणादौ न ज्ञानोदयः। यथाहुः "एकेन जन्मना क्षीणो भरतस्य त्रिजन्मभि"रिति ।

ब्रह्मलोकेच्छाया ब्रह्मसाक्षात्करोत्पत्तिप्रतिबन्धकत्वं विद्यारण्यस्वामिनो वदन्ति स्म—

ब्रह्मलोकाऽभिवाञ्छायां सम्यक् सत्यां निरुध्य ताम् ।
विचारयेद्यस्त्वात्मानं ननु साक्षात्करोत्ययम् ॥ इति ।

स पुनर्वेदान्तश्रवणादिमहिम्ना ब्रह्मलोकं गत्वा निर्गुणं ब्रह्म साक्षात्करोति । तथा च श्रुतिः "वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः, ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे" इति । स पुनस्तत्रैव मुच्यते ।

वर्त्तमानप्रतिबन्धं तन्निवृत्त्युपायं च विद्यारण्यस्वामिनो वर्णयांचक्रुः ।

प्रतिबन्धो वर्त्तमानो विषयाऽऽसक्तिलक्षणः ।
प्रज्ञामान्द्यं कुतर्कश्च विपर्ययदुराग्रहः ॥

शमाद्यैः श्रवणाद्यैर्वा तत्र तत्रोचितैः क्षयम् ।
नीते ऽस्मिन्प्रतिबन्धे तु स्वस्य ब्रह्मत्वमश्नुते ॥ इति ।

ततश्च श्रवणादिभिः सकलप्रतिबन्धनिवृत्त्या वाक्याद् ब्रह्मसाक्षात्कारोत्पत्तौ शमदमोपरतितितिक्षाश्रद्धासमाधानानि अन्तरङ्गसाधनानि ।

अन्तरिन्द्रियनिग्रहः शमः । बाह्येन्द्रियनिग्रहो दमः । उपरतिः संन्यासः । तितिक्षा द्वन्द्वसहिष्णुता । श्रद्धा गुरुवेदान्तविश्वासः । समाधानं श्रवणादिषु चित्तैकाग्र्यम् । "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्ये"दित्यादि । सूत्रकारोऽप्याह "शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्याऽनुष्ठेयत्वा"दिति ।

यज्ञादयो बहिरङ्गसाधनानि । "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा ऽनाशकेने"त्यादिश्रुतेः । "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्"दित्यप्युक्तम् ।

तदेवं मननादिसंस्कृतचित्तदर्पणसहकृतविचारितमहावाक्योत्पन्नेनाऽहं ब्रह्मास्मीत्यप्रतिबद्धब्रह्मसाक्षात्कारेणाऽज्ञाने निवृत्ते संचितकर्मणां नष्टत्वादागामिकर्मणामश्लेषात्प्रारब्धापादितविषयमनुभवन् मुमुक्षुरखण्डैकरससच्चिदानन्दब्रह्मात्मना ऽवतिष्ठते । एतादृशं फलं चतुर्थाऽध्यायपठनेन संभवतीति सांप्रदायिकानां रीतिः ।

अन्ये तु गुरुमुखात्संपूर्णशास्त्रपठनं श्रवणं, तस्य पठितस्य युक्तिभिरनुसंधानं मननम्, तस्यैव पुनः पुनरावृत्तिर्निदिध्यासनम्, अनन्तरं साक्षात्कार इत्याहुः ।

वस्तुतस्तु शुद्धसत्त्वानां मुख्याऽधिकारिणां व्युत्पन्नानामव्युत्पन्नानां च श्लोकेन श्लोकाऽर्द्धेन वा ब्रह्मसाक्षात्कारो भवत्येव ।

शब्दस्याऽचिन्त्यशक्तित्वात् । शास्त्रस्य शारीरकादेर्मुख्याधिकारि-विषयोपपत्तेः । तदुक्तं महाभारते—

आत्मानं विन्दते यस्तु सर्वभूतगुहाश्रयम् ।
श्लोकेन यदि वा ऽर्द्धेन क्षीणं तस्य प्रयोजनम् ॥ इति ।

सांप्रदायिकैरप्युक्तम् । " वाक्यश्रवणमात्रेण पिशाचवद-वाप्नुया"दिति ।

एतावानत्र विशेषः । अव्युत्पन्नानां परतन्त्रप्रज्ञत्वादसंभाव-नादिसंभवाद् ध्याननिष्ठा ऽपेक्षिता । तदुक्तं भगवता—

अन्ये त्वेवमजानन्तः श्रुत्वा ऽन्येभ्य उपासते ।
तेपि चाऽतितरन्त्येव मृत्युं श्रुतपरायणाः ॥ इति ।

विद्यारण्यैरप्युक्तम्—

अत्यन्तबुद्धिमान्द्याद्वा सामग्र्या वा ऽप्यसंभवात् ।
यो विचारं न लभते ब्रह्मोपासीत सो ऽनिशम् ॥ इति ।
"मरणे ब्रह्मलोके वा तत्त्वं ज्ञात्वा विमुच्यते" इति च ।

पतञ्जलिनाप्युक्तम् । "ततः प्रत्यक्चेतनाधिगमो ऽप्यन्तरा-याऽभावश्चे"ति ।

प्रमाणकुशलानां संशयादिग्रस्तानां पण्डितानामपि ध्या-ननिष्ठा ऽपेक्षिता । तदुक्तम् "अपि संराधने प्रत्यक्षानुमानाभ्यां"-मिति । अन्यत्राऽप्युक्तम्—

बहुव्याकुलचित्तानां विचारात् तत्त्वधीर्न चेत् ।
योगो मुख्यस्ततस्तेषां धीदर्पस्तेन नश्यति ॥ इति ।

संशयादिरहितानां ध्याननिष्ठा चेत्स्याद् दृष्टं सुखम् । तदुक्तं भगवता—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याऽभियुक्तानां योगक्षेमं वहाम्यहम् ॥

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ इति ।

न तु ज्ञानिनो ध्यानविधिः । देहाऽभिमानशून्यतया कर्त्तृत्वाऽभावेन तस्य विधिकिङ्करत्वाऽयोगात् । तदुक्तम् "अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिव"दिति । भाष्यकारैरप्युक्तम् "अहं ब्रह्मास्मीत्येतदवसाना एव सर्वे विधयः सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणीति देहेन्द्रियादिष्वहंममाभिमानहीनस्य प्रमातृत्वाऽनुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्ति"रिति ।

गौणमिथ्यात्मनो ऽसत्त्वे पुत्रदेहादिबाधनात् ।
तत्सद्ब्रह्माऽहमस्मीति बोधे कार्यं कथं भवेत् ॥ इत्युक्तम् ।

ज्ञानिनो ध्यानाऽभावे व्यवहारप्राचुर्य्याद् दृष्टदुःखमात्रं न मोक्षप्रतिबन्धः । तदुक्तं "तन्निष्ठस्य मोक्षोपदेशा"दिति । तस्मिन् ब्रह्मात्मनि निष्ठा अनन्यव्यापारतया परिसमाप्तिः पर्य्यवसानं यस्य स तथा तस्य, ज्ञानैकशरणस्येति यावत् । तथा भगवानप्याह—

य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।
सर्वथा वर्त्तमानोपि न स भूयो ऽभिजायते ॥
यस्य नाऽहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमान् लोकान् न हन्ति न निबध्यते ॥

शेषो ऽपि—

हयमेधशतसहस्राण्यथ कुरुते ब्रह्मघातलक्षाणि ।
परमार्थविन्न पुण्यैर्न च पापैः स्पृश्यते विमलः ॥ इति ।

विद्यारण्यैरप्युक्तम्—

पूर्णे बोधे तदन्यौ द्वौ प्रतिबद्धौ यदा तदा ।
मोक्षो विनिश्चितः किं तु दृष्टं दुःखं न नश्यति ॥ इति ।

बोधस्य पूर्णत्वाऽवधिर्विष्णुपुराणे पराशरेण दर्शितः—

अहं हरिः सर्वमिदं जनार्दनो
नान्यत्ततः कारणकार्यजातम् ।
ईदृङ्मनो यस्य न तस्य भूयो
भवोद्भवा द्वन्द्वगता भवन्ति ॥ इति ।

ब्रह्मगीतायां ब्रह्माणं प्रति शिवेनापि—

अहं हि सर्वं न च किं चिदन्य-
न्निरूपणायामनिरूपणायाम् ।
इयं हि वेदस्य परा हि निष्ठा
ममाऽनुभूतिश्च न संशयश्च ॥ इति ।

उपदेशसहस्रिकायामपि—

देहात्मज्ञानवद् ज्ञानं देहात्मज्ञानबाधकम् ।
आत्मन्येव भवेद्यस्य सो ऽनिच्छन्नपि मुच्यते ॥ इति ।

"अयमस्मीति पूरुष" इत्यत्राऽयमिति श्रुतेस्तात्पर्यप्रतिपादनव्याजेन विद्यारण्यैरपि दर्शितं तृप्तिदीपे—

असंदिग्धाऽविपर्यस्तबोधो देहात्मताक्षये ।
तद्वदात्मनि निर्णेतुमयमित्युच्यते पुनः ॥ इति ।

सर्वथापि श्रवणादिना ब्रह्मसाक्षात्कार, स्ततो ब्रह्मभावलक्षणा मुक्तिर्भवतीति सिद्धम् । "तमेव विदित्वा ऽतिमृत्युमेति" "तरति शोकमात्मवित्" "ब्रह्मविद्ब्रह्मैव भवति" "एवमेवैष सम्प्रसादो ऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाऽभिनिष्पद्यते स उत्तमः पुरुषः" ।

आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् ॥

"यत्पूर्णानन्दैकबोधस्तद्ब्रह्माहमस्मीति कृतकृत्यो भवती"ति ।
"एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारते"त्यादिश्रुतिस्मृतिभ्यः ।
शेषो ऽप्याह ।

वृक्षाग्राच्च्युतपादो यद्वदनिच्छन्नपि क्षितौ पतति ।
तद्वद्गुणपुरुषज्ञो ऽनिच्छन्नपि केवलीभवति ॥ इति ।

इति तत्त्वाऽनुसंधाने तृतीयः परिच्छेदः ॥

---

# अथ चतुर्थः परिच्छेदः ।

—:०:—

सा च मुक्तिर्द्विविधा, विदेहमुक्तिर्जीवन्मुक्तिश्चेति ।

तत्र तत्त्वज्ञानिनो भोगेन प्रारब्धकर्मक्षये वर्त्तमानशरीरपातो विदेहमुक्तिः । तदुक्तं "भोगेन त्वितरे क्षपयित्वा संपद्यते" इति ।

अन्ये तु भाविशरीराऽनारम्भो विदेहमुक्तिः । सा च ज्ञानोत्पत्तिसमकालैव । ज्ञानेनाऽज्ञाने निवृत्ते संचितकर्मणां नाशादागामिकर्मणामश्लेषाद्भोगेन प्रारब्धक्षयाच्छरीरान्तराऽऽरम्भकस्याऽसंभवात् भाविशरीराऽनारम्भस्य ज्ञानसमकालत्वं युज्यते । तदुक्तम्—

तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन् देहम् ।
ज्ञानसमकालमुक्तः कैवल्यं याति हतशोकः ॥ इति ।

एवं वर्णयांचक्रुः । श्रवणादिभिरुत्पन्नसाक्षात्कारस्य विद्वत्संन्यासिनः कर्तृत्वाद्यखिलबन्धप्रतिभासनिवृत्तिर्जीवन्मुक्तिः । भोगप्रदप्रारब्धप्राबल्येऽपि योगाऽभ्यासेन तदभिभवात् प्रारब्धाऽपेक्षया योगाऽभ्यासस्य प्रबलत्वात् । अन्यथा पुरुषप्रयत्नवैयर्थ्येन चिकित्साशास्त्रमारभ्य मोक्षशास्त्रपर्यन्तस्याऽनारम्भप्रसङ्गात् । अत एव पुरुषप्रयत्नस्य साफल्यमाह वसिष्ठः—

आ बाल्यादलमभ्यस्तैः शास्त्रसत्संगमादिभिः ।
गुणैः पुरुषयत्नेन सो ऽर्थः संपाद्यते हितः ॥ इति ।

तत्र श्रुतिस्मृतीतिहासपुराणवचनानि प्रमाणानि । "विमुक्तश्च विमुच्यते" इति श्रुतिः ।

यो जागर्त्ति सुषुप्तिस्थो यस्य जाग्रन्न विद्यते ।
यस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते॥इति वासिष्ठे ।

प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥
अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥
संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥

इत्यत्र जीवन्मुक्तभक्त उच्यते ।

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डवे" त्यारभ्य "गुणातीतः स उच्यते" इत्यन्तेन जीवन्मुक्तो दर्शितः ।

निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् ।
अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः॥इति महाभारते।

यथा स्वप्नप्रपञ्चो ऽयं मयि मायाविजृम्भितः ।
एवं जाग्रत्प्रपञ्चो ऽयं मयि मायाविजृम्भितः ॥ इति ।

"यो वेद वेदवेदान्तैः सोतिवर्णाश्रमी भवेत्॥इति पुराणे ।

सेयं जीवन्मुक्तिस्तत्त्वज्ञानवासनाक्षयमनोनाशाऽभ्यासाद् सिध्यति । उत्पन्नस्य तत्त्वज्ञानस्याऽभ्यासो नाम पुनः पुनः केनाऽप्युपायेन तत्त्वानुऽसंधानम् । तदुक्तम्—

तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् ।
एतदेव परं तत्त्वं ब्रह्माऽभ्यासं विदुर्बुधाः ॥ इति ।

यद्यपि तत्त्वज्ञानात् प्रागपि वासनाक्षयमनोनाशाभ्यासो ऽपेक्षितस्तथापि विविदिषासंन्यासिन उपसर्जनभूतः सः, श्रवणाद्यभ्यास एव प्रधानः। विद्वत्संन्यासिनस्तु तत्त्वज्ञानाभ्यास उपसर्जनभूतो, वासनाक्षयमनोनाशाऽभ्यासः प्रधान इत्यविरोधः। कृतोपासनस्य मुख्याऽधिकारिणस्तदपेक्षाऽभावेपि अकृतोपास्तेरस्मदादेस्तदभावे चित्तविश्रान्त्यभावादुत्पन्नमपि तत्त्वज्ञानं विष-

याऽबाधात्प्रमारूपमज्ञाननिवर्त्तकमप्यसंभावनादिसंभवान्न सुकरमिति वासनाक्षयमनोनाशाऽभ्यासो ऽपेक्षितः ।

वासनासामान्यलक्षणं तद्विभागं तत्प्रयोजनं लक्षणं च वसिष्ठ आह—

दृढभावनया त्यक्तपूर्वाऽपरविचारणम् ।
यदादानं पदार्थस्य वासना सा प्रकीर्तिता ॥
वासना द्विविधा प्रोक्ता शुद्धा च मलिना तथा ।
मलिना जन्महेतुः स्याच्छुद्धा जन्मविनाशिनी ॥
जन्ममृत्युकरी प्रोक्ता मलिना वासना बुधैः ।
पुनर्जन्माऽङ्कुरं त्यक्त्वा स्थिता सम्भ्रष्टबीजवत् ॥
देहार्थं ध्रियते ज्ञातज्ञेया शुद्धेति चोच्यते ॥ इति ।

तत्र मलिनवासनाजन्महेतवो ऽनेकप्रकारा दर्शिताः—

लोकवासनया जन्तोर्देहवासनया ऽपि च ।
शास्त्रवासनया ज्ञानं यथावन्नैव जायते ॥ इति ।
दम्भो दर्पो ऽभिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाऽभिजातस्य पार्थसम्पदमासुरीम् ॥ इति च ।

योषित्पुत्रादिविषयाऽभिलाषाश्च मलिनवासना द्रष्टव्याः । विवेकदोषदर्शनसत्सङ्गसन्निधित्यागप्रतिकूलवासनोत्पादनेन उक्तानां मलिनवासनानामन्तःकरणगतानामनुत्पादो वासनाक्षयाऽभ्यासः । तथैव वसिष्ठादिभिर्दर्शितम्—

दृश्याऽसम्भवबोधेन रागद्वेषादितानवे ।
रतिर्घनोदिता या तु बोधाऽभ्यासं विदुः परम् ॥ इति ।
असङ्गव्यवहारित्वाद्भवभावनवर्जनात् ।
शरीरनाशदर्शित्वाद्वासना न प्रवर्त्तते ॥ इति च ।
नैष्कर्म्येण न तस्याऽर्थो न तस्याऽर्थो ऽस्ति कर्मभिः ।

न समाधानजप्याभ्यां यस्य निर्वासनं मनः ॥
आत्मा ऽसङ्गस्ततो ऽन्यत् स्यादिन्द्रजालमिदं जगत् ।
इत्यचञ्चलनिर्णीते कुतो मनसि वासना ॥ इति ।
दुःखं जन्मजरादुःखं मृत्युदुःखं पुनः पुनः ।
संसारमण्डलं दुःखं पच्यन्ते यत्र जन्तवः ॥ इति इतिहासे ।
निःसङ्गता मुक्तिपदं यतीनां
सङ्गादशेषाः प्रभवन्ति दोषाः ।
आरूढयोगोपि निपात्यते ऽधः
सङ्गेन योगो किमुता ऽल्पसिद्धिः ॥ इति विष्णुपुराणे ।
तथा भागवते ऽपि—
सङ्गं त्यजेत मिथुनव्रतिनां मुमुक्षुः
सर्वात्मना न विसृजेद्बहिरिन्द्रियाणाम् ।
एकश्चरेद्रहसि चित्तमनन्तईशे
युञ्जीत तद्व्रतिषु साधुषु चेत्प्रसङ्गः ॥ इति ।
स्त्रीणां तत्सङ्गिनां सङ्गं त्यक्त्वा दूरत आत्मवान् ।
क्षेमे विविक्त आसीनश्चिन्तयेन्मामतन्द्रितः ॥ इति च ।
महत्सेवां द्वारमाहुर्विमुक्ते-
स्तमोद्वारं योषितां सङ्गिसङ्गम् ।
महान्तस्ते समचित्ताः प्रशान्ता
विमन्यवः सुहृदः साधवो ये ॥ इति च ।
तत्सङ्गे पातित्यमाह—
योषिद्धिरण्याऽऽभरणाऽम्बरादि-
द्रव्येषु मायारचितेषु मूढः ।
प्रलोभितात्मा ह्युपभोगबुद्ध्या
पतङ्गवन्नश्यति नष्टदृष्टिः ॥ इति ।

प्रतिकूलवासना मैत्र्यादिवासना:। ताश्च दर्शिताः "मैत्रीकरुणामुदितोपेक्षणां सुखदुःखपुण्याऽपुण्यविषयाणां भावनातश्चित्तप्रसादन"मिति। अस्यार्थः—सुखिप्राणिष्वेते मदीया इति मैत्रीं, दुःखिप्राणिषु यथा मम दुःखं मा भूदेवमन्येषामपि दुःखं मा भूदिति करुणां, पुण्यकारिषु पुरुषेषु मुदितां, पापिषूपेक्षां भावयतो रागद्वेषाऽसूयामदमात्सर्य्यादिनिवृत्त्या चित्तप्रसादो भवतीति।

तथा दैवसम्पदभ्यासेनाऽऽसुरसम्पन्नश्यति। दैवी सम्पद्भगवता दर्शिता "अभयं सत्त्वसंशुद्धि"रित्यारभ्य "भवन्ति सम्पदं दैवीमभिजातस्य भारते"त्यन्तेन। "अमानित्व"मित्यादिनोक्ताऽमानित्वादिधर्माभ्यासेन तद्विपरीतमानादयो नश्यन्ति। तथा च मैत्र्यादिवासनां सङ्कल्पपूर्वकमभ्यस्याऽनन्तरमजिह्वत्वादिधर्मानभ्यसेत्।

अजिह्वत्वादयो दर्शिताः—

अजिह्वः षण्ढकः पङ्गुरन्धो वधिर एव च।
मुग्धश्च मुच्यते भिक्षुः षड्भिरेतैर्न्न संशयः॥ इति।

इदमिष्टमिदं नेति यो ऽश्नन्नपि न सज्जते।
हितं सत्यं मितं वक्ति तमजिह्वं प्रचक्षते॥
अद्यजातां यथा नारीं तथा षोडशवार्षिकीम्।
शतवर्षां च यो दृष्ट्वा निर्विकारः स षण्ढकः॥
भिक्षार्थं गमनं यस्य विण्मूत्रकरणाय च।
योजनान्न परं याति सर्वथा पङ्गुरेव सः॥
तिष्ठतो व्रजतो वापि यस्य चक्षुर्न दूरगम्।
चतुर्युगां भुवं मुक्त्वा परिव्राट् सो ऽन्ध उच्यते॥
हिताऽहितं मनोरामं वचः शोकाऽऽवहं च यत्।
श्रुत्वाऽपि यो न शृणुते वधिरः स प्रकीर्त्तितः॥

सांनिध्ये विषयाणां च समर्थो ऽविकलेन्द्रियः।
सुप्तवद्वर्त्तते नित्यं स भिक्षुर्मुग्ध उच्यते॥ इति।
तदनन्तरं चिन्मात्रवासनामभ्यसेत्।

नामरूपात्मकस्य जगतश्चैतन्ये कल्पितत्वेन स्वतः सत्ताशून्यतया चैतन्यसत्तास्फुरणपूर्वकमेव स्फुरणं भवति। तत्र नामरूपे मिथ्यात्वनिश्चयेनोपेक्ष्य चिन्मात्रो ऽहमिति भावयेत्।

सेयं चिन्मत्रवासना द्विप्रकारा, कर्तृकर्मकरणाऽनुसंधानपूर्विका केवला चेति। तत्र सर्वं जगच्चिन्मात्रमहं मनसा भावयामीति क्रियमाणा प्रथमा। सा संप्रज्ञातसमाधिकोटावन्तर्भवति। कर्तृकर्मकरणाऽनुसंधानरहिता चिन्मात्रो ऽहमिति भवना केवला। सर्वस्य चिन्मात्रत्वं शुक्रेण बलिं प्रत्युपदिष्टं—

चिदिहास्तीह चिन्मात्रं सर्वं चिन्मयमेव तत्।
चित्त्वं चिदहमेवेति लोकाश्चिदिति संग्रहः॥

द्वितीया ऽसंप्रज्ञातसमाधिकोटावन्तर्भवति। तस्यां चिन्मात्रवासनायां दृढाऽभ्यस्तायां पूर्वोक्ता मलिनवासना सर्वा क्षीयते। अयं वासनाक्षयाऽभ्यासः॥जतुसुवर्णादिवत्सावयवं कामादिवृत्तिरूपेण परिणममानमन्तःकरणं मननात्मकत्वान्मनः। तच्च सत्त्वरजस्तमोगुणात्मकं तदाश्रयत्वेन सत्त्वरजस्तमोविकाराणां सुखदुःखमोहादीनामुपलम्भात् रजस्तमोवृत्तिभिरुपचीयमानमन्तःकरणं पीनमात्मदर्शनाऽयोग्यं भवतीत्यतस्तदर्थं वृत्तिनिरोधनेन सूक्ष्मताऽऽपादनं मनसो नाश इत्युच्यते।

तत्साधनानि दर्शितानि—
अध्यात्मविद्याऽधिगमः साधुसंगम एव च।
वासनासंपरित्यागः प्राणस्पन्दनिरोधनम्।
एतास्तु युक्तयः पुष्टाः सन्ति चित्तजये किल॥

प्राणनिरोधोपायो दर्शितः—

प्राणायामदृढाऽभ्यासाद्युक्त्या च गुरुदत्तया ।
आसनाऽशनयोगेन प्राणस्पन्दो निरुध्यते ॥ इति ।

प्राणायामप्रकारो दर्शितः—

इडया पिब षोडशभिः पवनं
चतुरुत्तरषष्टिकमौदरिकम् ।
त्यज पिङ्गलया शनकैः शनकै-
र्दशभिर्दशभिर्दशभिर्व्यधिकैः ॥ इति ।

इडया वामनासिकया पिब पूरय, त्यज रेचय पिङ्गलया दक्षिणनासिकयेत्यर्थः ।

प्राणायामस्य मनोनाशोपायत्वं श्रुतावप्युक्तम्—

प्राणान् प्रपीड्येह सुयुक्तचेष्टः
क्षीणे प्राणे नासिकयोच्छ्वसीत ।
दुष्टाश्वयुक्तमिव वाहमेनं
विद्वान्मनो धारयेताप्रमत्तः ॥ इति ।

आसनयोगं तत्साधनं तत्फलं च पतञ्जलिरसूत्रयत् "तत्र स्थिरसुखमासनं, प्रयत्नशैथिल्याऽनन्तसमापत्तिभ्याम्"। प्रयत्नशैथिल्यं लौकिकवैदिककर्मत्यागः । फणानां सहस्रेण धरणीं धृत्वा योनन्तो वर्त्तते स एवाऽहमस्मीत्यनुसंधानम् अनन्तसमापत्तिः। अनयाऽऽसनप्रतिबन्धकं दुरितं क्षीयते। "ततो द्वन्द्वाऽनभिघातः"। आसनाऽभ्यासस्य फलं द्वन्द्वनिवृत्तिः ।

आसनयोगो ऽपि दर्शितः—

द्वौ भागौ पूरयेदन्नैर्जलेनैकं प्रपूरयेत् ।
मारुतस्य प्रचारार्थं चतुर्थमवशेषयेत् ॥ इति ।

एवं प्राणायामादिना प्राणस्पन्दे निरुद्धे ऽखिलाश्चित्तवृत्तयो निरुध्यन्ते, प्राणस्पन्दाऽऽधानत्वाच्चित्तवृत्त्युदयस्य। ततश्च स्वभा-

वत आत्माऽनात्माकारमन्तःकरणमनात्माकारवृत्तिनिरोधादात्मैकाकारं भवति। यथाहुः—

आत्माऽनात्माकारं स्वभावतो ऽवस्थितं सदा चित्तम्।
आत्मैकाकारतया तिरोहिताऽनात्मदृष्टि विदधीत॥ इति।

अयमेव योगः। यथाहुः "योगश्चित्तवृत्तिनिरोध" इति।

तत्साधनं चाहुः "अभ्यासवैराग्याभ्यां तन्निरोध" इति। भगवानपि तत्रैव—

असंशयं महाबाहो मनो दुर्निग्रहं चलम्।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते॥ इति।

वैराग्यं निरूपितम्।

निरोधो द्विविधः। संप्रज्ञातो ऽसंप्रज्ञातश्चेति।

कर्त्राद्यनुसंधानं विना चिन्मात्रलक्ष्यैकगोचरप्रत्ययप्रवाहः संप्रज्ञातसमाधिः। यथाहुः—

विलाप्य विकृतिं कृत्स्नां संभवव्यत्ययक्रमात्।
परिशिष्टं तु चिन्मात्रं सदानन्दं विचिन्तयेत्॥
ब्रह्माऽऽकारमनोवृत्तिप्रवाहो ऽहंकृतिं विना।
संप्रज्ञातसमाधिः स्याद् ध्यानाऽभ्यासप्रकर्षजः॥ इति।

अस्य संप्रज्ञातसमाधेरङ्गिनो यमादीन्यष्टाङ्गानि। तत्र यमनियमाऽऽसनप्राणायामप्रत्याहारा बहिरङ्गानि।

अहिंसासत्याऽस्तेयब्रह्मचर्याऽपरिग्रहा यमाः। अष्टाङ्गमैथुनवर्जनं ब्रह्मचर्यम्। यथा ऽऽहुः—

स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम्।
संकल्पो ऽध्यवसायश्च क्रियानिर्वृत्तिरेव च॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः।
विपरीतं ब्रह्मचर्यमनुष्ठेयं मुमुक्षुभिः॥

सत्संगसन्निधिस्यागदोषदर्शनतो भवेत् ॥ इति ।

अत एव स्त्रीणां संभाषणादिनिषेधो ऽपि मुमुक्षूणाम्—

न संभाषेत्स्त्रियं कां चिद् पूर्वदृष्टां न च स्मरेत् ।

कथां च वर्जयेत्तासां न पश्येल्लिखितामपि ॥

इत्यादि स्मृतौ ।

शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ।

आसनं निरूपितम् । तच्च पद्मस्वस्तिकादि अनेकप्रकारम् ।

रेचकपूरककुम्भकाः प्राणायामाः ।

इन्द्रियाणां विषयेभ्यो निवर्त्तनं प्रत्याहारः। एतेषु बहिरङ्गेषु जितेष्वन्तरङ्गेषु यत्नः कर्तव्यः ।

धारणाध्यानसमाधयः संप्रज्ञातसमाधेरन्तरङ्गसाधनानि ।

धारणा नाम मूलाधारमणिपूरकस्वाधिष्ठानाऽनाहताऽऽज्ञाविशुद्धचक्रदेशानामन्यतरस्मिन् प्रत्यगात्मनि वा चित्तस्य स्थापनम् । तदेकस्मरणमिति यावत् ।

ध्यानं नाम तत्र प्रत्ययैकतानता । लक्ष्यैकगोचरप्रत्ययप्रवाह इत्येतत् ।

प्रत्ययप्रवाहो द्विविधः। विजातीयप्रत्ययान्तरितस्तदनन्तरश्चेति। आद्यो ध्यानं, द्वितीयः समाधिः ।

सो ऽपि द्विविधः। कर्त्राद्यनुसंधानपूर्वकस्तद्रहितश्चेति। आद्यो ऽङ्गसमाधिः । द्वितीयो ऽङ्गी ।

संप्रज्ञातसमाध्युदये लयविक्षेपकषायरसास्वादाश्चत्वारो विघ्नाः सन्ति। लयो निद्रा । पुनः पुर्विनषयाऽनुसंधानं विक्षेपः । चित्तस्य रागादिना स्तब्धभावः कषायः । समाध्यारम्भसमये सविकल्पकानन्दाऽऽस्वादो रसास्वादः । यथा हुः—

लये संबोधयेच्चित्तं विक्षिप्तं शमयेत् पुनः ।

सकषायं विजानीयाद् ब्रह्म प्राप्तं न चालयेत्।
नाऽऽस्वादयेद्रसं तत्र निःसङ्गः प्रज्ञया भवेत्॥ इति।

अस्यार्थः—प्राणायामादिना लयाऽभिमुखं चित्तमुत्थापयेत्। दोषदर्शनब्रह्माऽनुसंधानादिना विक्षिप्तं चित्तं शमयेत्। ब्रह्म प्राप्तं चित्तं न चालयेत्। समाध्यारम्भसमये सविल्पकाऽऽनन्दं नाऽऽस्वादयेत्। किं तूदासीनो ब्रह्मप्रज्ञया युक्तो भवेदिति।

एवं निर्विघ्नेन संप्रज्ञातसमाध्यभ्यासेनाऽऽत्मप्रसादमात्रे मनसि ऋतम्भरा प्रज्ञोदेति।

अतीताऽनागतविप्रकृष्टव्यवहितसूक्ष्मवस्तुविषयं योगिप्रत्यक्षम् ऋतम्भरा प्रज्ञा। तामपि निरुद्ध्य समाधिमभ्यसतो गुणवैतृष्ण्यं परवैराग्यमुदेति। तत्तु निरूपितम्। ततोप्य ऽभ्यासः कर्त्तव्यः।

उत्साहप्रयत्नो ऽभ्यासः। यथाहुः "तत्र स्थितौ यत्नो ऽभ्यास" इति। तस्यापि निरोधे सर्वधीनिरोधो भवति। अयमेवाऽसंप्रज्ञातसमाधिः। न केवलं परवैराग्यादेव समाधिलाभः, किं त्वीश्वरप्रणिधानादपि। तथा चोक्तम् "ईश्वरप्रणिधानाद्वा, क्लेशकर्मविपाकाऽऽशयैरपरामृष्टः पुरुषविशेष ईश्वरः, तस्य वाचकः प्रणवः, तज्जपस्तदर्थभावन"मिति। एतदुक्तं भवति—ईश्वरप्रणिधानाद्वा समाधिलाभः। क्लेशादिभिरसंबद्धः सर्वज्ञः सर्वशक्तिरीश्वरः। ईश्वरस्याऽभिधायकः शब्दः प्रणवः।

प्रणवजपो माण्डूक्योपनिषत्पञ्चीकरणतद्वार्त्तिकोक्तप्रकारेण, प्रणवाऽर्थाऽनुसंधानं च ईश्वरप्रणिधानम्।

अथ वा "तद्यो ऽहं सो ऽसौ यो ऽसौ सो ऽह"मित्यत्र सशब्देन परमात्मोच्यते। अहंशब्देन प्रत्यगात्मोच्यते। अनयोः सामानाधिकरण्याद् ब्रह्मात्मैक्यमुच्यते। ततश्च सो ऽहमित्यस्य परमात्मा

ऽहमित्यर्थो यथा तथा प्रणवस्यापि । तथा हि—सोऽहमित्यत्र सकारहकारयोर्लोपे कृते परिशिष्टयोः 'ओ अम्' इत्यनयोः सन्धि कृत्वोच्चारणे ओमिति शब्दो निष्पन्नः । तदुक्तम्—

सकारं च हकारं च लोपयित्वा प्रयोजयेत् ।
संधिं च पूर्वरूपाख्यं ततोऽसौ प्रणवो भवेत् ॥ इति ।

ततश्च ओमित्यस्य शब्दस्य परमात्माऽहमित्यर्थः । सर्वथापि प्रणवजपप्रणवार्थाऽनुसंधानरूपेण ईश्वरप्रणिधानेन परमेश्वराऽनुग्रहात् समाधिलाभो भवत्येव ।

एवं समाध्यभ्यासेनाऽन्तःकरणस्याऽतिसूक्ष्मताऽऽपादनं मनोनाश इत्युच्यते । अनेन सूक्ष्मेण मनसा त्वंपदलक्ष्ये साक्षात्कृते महावाक्येन स्वस्य ब्रह्मत्वसाक्षात्कारो भवति । न केवलं समाधिनैव साक्षात्कारः, किं तु विवेकेनाऽपि भवति । अन्तःकरणतद्वृत्तीनामवभासको यश्चिदात्मा साक्षी तस्मिन् साक्षात्कृते वाक्याद् ब्रह्मसाक्षात्कारः संभवत्येव । तदाह—

द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव ।
योगो वृत्तिनिरोधो हि ज्ञानं सम्यगवेक्षणम् ॥
असाध्यः कस्य चिद्योगः कस्य चिद् ज्ञाननिश्चयः ।
प्रकारौ द्वौ तदा देवो जगाद परमेश्वरः ॥ इति ।

ज्ञानं विवेकः । तृतीयाऽध्याये "इन्द्रियाणि पराण्याहु"रित्यारभ्य "कामरूपं दुरासद"मित्यन्तेन विवेकम्, षष्ठाऽध्याये योगं च "यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते"इति वासुदेवः सर्वज्ञो भगवान् द्वौ प्रकारौ जगादेति श्लोकार्थः । तदेवं तत्त्वज्ञानवासनाक्षयमनोनाशाऽभ्यासाज्जीवन्मुक्तिः सिध्यतीति सिद्धम् ।

तस्या जीवन्मुक्तेः पञ्च प्रयोजनानि सन्ति । ज्ञानरक्षा, तपो, विसंवादाऽभावो, दुःखनिवृत्तिः, सुखाऽऽविर्भावश्चेति ।

तत्रोत्पन्नब्रह्मसाक्षात्कारस्य पुंसः पुनः संशयविपर्ययाऽनुत्पादो ज्ञानरक्षा। तथा हि—ज्ञानिनां शुकराघवनिदाघादीनामिवाऽकृतोपास्तेर्ज्ञानिनो ऽस्मदादेश्चित्तविश्रान्त्यभावात्पुनः कदा चित् संशयविपर्ययौ भवेताम्। अज्ञानवत् तावपि मोक्षप्रतिबन्धकौ। तदाह भगवान् "अज्ञश्चाऽश्रद्दधानश्च संशयात्मा विनश्यती"ति। ततश्च जीवन्मुक्त्यभ्यासेन संभवति संशयविपर्ययनिवृत्तिः। ज्ञानरक्षा नाम प्रथमं प्रयोजनम्।

चित्तैकाग्र्यं तपः।

मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः।

स ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते॥ इति स्मरणात्।

ज्ञानिनो जीवन्मुक्तस्याऽखिलवृत्तीनामनुदयान्निरङ्कुशं चित्तैकाग्र्यं संपद्यते, तदेव तपः। तच्च लोकसंग्रहाय भवति। तदुक्तं "लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसी"ति।

संग्राह्यो लोकस्त्रिविधः। शिष्यो, भक्त,स्तटस्थश्चेति।

तत्र सन्मार्गवर्ती शिष्यो गुरूपदिष्टमार्गेण श्रवणादिना ब्रह्म साक्षात्कुर्वन्मुच्यते। "आचार्यवान् पुरुषो वेद" "तस्य तावदेव चिरं यावन्न विमोक्ष्ये ऽथ संपत्स्ये" इति श्रुतेः।

भक्तो ऽपि ज्ञानिनः पूजाऽन्नपानादिना ऽभीष्टं प्राप्नोति। तथा च श्रुतिः—

यं यं लोकं मनसा संविभाति
विशुद्धसत्त्वः कामयते यांश्च कामान्।
तं तं लोकं जयति तांश्च कामान्
तस्मादात्मज्ञं ह्यर्चयेद् भूतिकामः॥ इति।

स्मृतिरपि—

यद्येको ब्रह्मविद् भुङ्क्ते जगत्तर्पयते ऽखिलम्।

तस्माद् ब्रह्मविदे देयं यद्यस्ति वस्तु किं चन ॥ इत्यादि ।

तटस्थो द्विविधः । सन्मार्गवर्त्त्यसन्मार्गवर्त्ती चेति । तत्र सन्मार्गवर्त्ती मुक्तस्य सदाचारे प्रवृत्तिं दृष्ट्वा स्वयमपि तत्र प्रवर्त्तते । तदाह भगवान्—

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते ॥ इति ।

असन्मार्गवर्त्ती तु जीवन्मुक्तस्य दृष्टिपातेन सर्वपापैः प्रमुच्यते ।

तथा च स्मृतिः—

यस्याऽनुभवपर्यन्ता बुद्धिस्तत्त्वे प्रवर्त्तते ।
तद्दृष्टिगोचराः सर्वे मुच्यन्ते सर्वकिल्बिषैः ॥ इति ।

द्वेषिणस्तु ज्ञानिनो दुष्कृतं संभावितं गृह्णन्ति । तथा च श्रुतिः "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्या"मिति । एवं जीवन्मुक्तस्य तपो लोकसंग्रहाय भवति । इति तपो नाम द्वितीयं प्रयोजनम् ।

जीवन्मुक्तस्य व्युत्थानदशायामसत्कृतनिन्दादिश्रवणेऽपि पाखण्डकृतनिष्ठुरादिदर्शनादावपि चित्तवृत्त्यनुदयाद्विसंवादो न भवति । यथा ऽऽहुः—

ज्ञात्वा वयं तत्त्वनिष्ठां ननु मोदामहे वयम् ।
अनुशोचाम एवाऽन्यान्न भ्रान्तैर्विवदामहे ॥ इति ।

विसंवादाऽभावो नाम तृतीयं प्रयोजनम् ।

दुःखनिवृत्तिर्द्विविधा । ऐहिकदुःखनिवृत्ति, रामुष्मिकदुःखनिवृत्तिश्चेति ।

तत्र ज्ञानेन भ्रान्तेर्निवृत्ततया योगाऽभ्यासेनाऽखिलवृत्तिनिरोधेन चित्तस्याऽऽत्मैकाकारतया ऐहिकसमस्तदुःखनिवृत्तिः प्रारब्धभोगे सत्यपि । तथा च श्रुतिः "आत्मानं चेद्विजानीया"दित्या-

दिना ऐहिकदुःखनिवृत्तिं मुक्तस्य दर्शयति । ज्ञानेनाऽज्ञाननिवृत्त्या संचिताऽऽगामिकर्मणामश्लेषविनाशाभ्यामामुष्मिकदुःखानामपि निवृत्तिः । तथा च श्रुतिः "एतं ह वाव न तपति किमहं साधु नाऽकरवं किमहं पापमकरवम्" इत्यादि । दुःखनिवृत्तिर्नाम चतुर्थं प्रयोजनम् ।

मुक्तस्य ज्ञानयोगाभ्यासज्ञानतत्कृताऽऽवरणविक्षेपनिवृत्त्या बाधकाऽभावात्परिपूर्णब्रह्मानन्दाऽनुभवसुखाऽविर्भावः । इममेवार्थं श्रुतिर्दर्शयति—

समाधिनिर्धूतमलस्य चेतसो
निवेशितस्यात्मनि यत्सुखं भवेत् ।
न शक्यते वर्णयितुं गिरा तदा
स्वयं तदन्तःकरणेन गृह्यते ॥ इति ।

सुखाऽऽविर्भावो नाम पञ्चमं प्रयोजनम् । एवं स्वरूपप्रमाणसाधनफलनिरूपणैः द्विधा मुक्तिर्निरूपिता ।

तस्माद्ब्रह्मविज्जीवन्मुक्तो भोगेन प्रारब्धकर्मणि क्षीणे वर्त्तमानशरीरपातेऽखण्डैकरसब्रह्मानन्दात्मना ऽवतिष्ठते । "न तस्य प्राणा उत्क्रामन्ति अत्रैव समवलीयन्ते "ब्रह्मैव सन् ब्रह्माऽप्येति" "ब्रह्म वेद ब्रह्मैव भवति"

विभेदजनके ऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्याति ॥
तद्भावभावमापन्नस्ततो ऽसौ परमात्मना ।
भवत्यभेदो, भेदश्च तस्याऽज्ञानकृतो भवेत् ॥

दित्यादिश्रुतिस्मृतिशतेभ्यः । भगवान् सूत्रकारोऽप्याह "अस्मिन्नस्य च तद्योगं शास्तीति । तस्मादहं ब्रह्मास्मीति तत्त्वमस्यादिवाक्यजन्यज्ञानाद्ब्रह्मभावलक्षणो मोक्षो भवतीति सिद्धम् ।

"न स पुनरावर्त्तते"

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥

इत्यादिश्रुतिस्मृतिभ्यः ।

श्रीमत्स्वयंप्रकाशाख्यगुरुणा करुणावशात् ।
उपदिष्टपरात्मैक्यं तत्त्वमावेदितं मया ॥

ब्रह्मेशविष्ण्वादिसमस्तदेवाः
स्वस्वाऽधिकारेषु विभीतचित्ताः ।
आज्ञावशाद्यस्य वसन्ति सर्वे
तं कृष्णमाद्यं शरणं प्रपद्ये ॥

या भारती शर्वविरिञ्चिविष्णु-
देवादिभिर्नित्यमुपास्यमाना ।
सदा ऽक्षमालाविलसत्कराग्रां
वाग्वादिनीं तां प्रणमामि देवीम् ॥

आकाशपुष्पमिव विश्वमहं निरीक्षे
मग्नो ऽस्मि नित्यसुखबोधरसाऽमृताब्धौ ।
प्रत्यञ्चमद्वयमनन्तसुखैकबोधं
साक्षात्करोमि पदभावनया गुरूणाम् ॥

यत्पादयुग्मकमलाश्रयणं विना ऽहं
संसारसिन्धुपतितः सुखदुःखभाक् स्याम् ।
यत्पादयुग्मकमलाऽऽश्रयणात् सुतीर्ण-
स्तद्देशिकाऽङ्घ्रिकमलं प्रणतो ऽस्मि नित्यम् ॥

परमसुखपयोधौ मग्नचित्तो महेशं
हरिविधिसुरमुख्यान् देशिकं देहिमात्रम् ।

जगदपि न विजाने पूर्णसत्त्वात्मसंवित्-
सुखतनुरहमात्मा सर्वसंसारशून्यः ॥

यदुकुलवररत्नं कृष्णमन्यांश्च देवान्
मनुजपशुमृगादीन् ब्राह्मणादींन्न जाने ।
परमसुखसमुद्रे मज्जनात्तन्मयोऽहं
गलितनिखिलभेदः सत्यबोधैकरूपः ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीमत्स्वयंप्रकाशानन्दसरस्वती-
पूज्यपादशिष्यभगवन्महादेवसरस्वतीमुनिविरचिते
तत्त्वाऽनुसंधाने चतुर्थः परिच्छेदः ।

समाप्तश्चाऽयं ग्रन्थः ॥

शुभं भवतु ।



## बनारससंस्कृतसीरीज़नाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

---

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदेकैकस्य खण्डस्य ॥।) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्महाशयैर्यैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां १) मूल्यं प्रापणव्ययश्च =) देय इति ॥

| तत्र मुद्रिता ग्रन्थाः । | रु० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रह अंग्रेजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं ख० ६ | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ५ ( प्रथमभागः प्रथमद्वितीयकाण्डे पुण्यराजटीकासहित खण्ड ३ । द्वितीयभागः तृतीयाकाण्डम् हेलाराजटीकासहित खण्ड २ ) | ५ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ४ | ४ | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यम् | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| (बृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | ० |
| विवरणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |
| तत्त्वदीपनम् ( पञ्चपादिकाविवरणस्य व्याख्यानम् ) ख० | ८ | ० |
| वेदान्तदीपः (श्रीभगवद्रामानुजाचार्यविरचितः) खण्डानि ३ | ३ | ० |
| टुप्टीका खण्डानि ४ | ४ | ० |

